## ॥ प्रस्तावना ॥

॥ श्रीमद्विजयकमलसूरीश्वरचरणारविन्देभ्यो नमः ॥

विदितमेतन्मनीषिणां विद्वज्जनानां यदुत निखिलसुरासुरसर्वसहापतिव्रजततिसङ्क्रमिताङ्गाराङ्गणसिद्धार्थैलापत्यतिविस्तृतान्वयनभोनभोमणिभिः शासनाधिपश्रीमज्जिनपतिभगवद्भिर्वर्द्धमानविभुभिः प्रतिपत्त्यादिविशिष्टगुणगणगरिम्णां त्रिभुवनान्तर्वर्त्त्यखिलासुमत्समुद्धरणदक्षकक्षाणामाग्निवैश्यायनगोत्रालङ्कृतानां श्रीसुधर्म्मस्वामिगणभृतामुत्पादव्ययध्रुवात्मरूपा त्रिपद्यर्थतस्समर्पिता, तदनुसृत्या च तैर्भगवद्भिः सूत्रतोऽगुम्फि द्वादशाङ्गी । तदन्तःपातिविवाहप्रज्ञप्त्यन्याभिधानभगवत्याख्यपञ्चमाङ्गनवमशतकद्वात्रिंशत्तमोद्देशके पार्श्वयक्षोपसेवित–निर्निमेषेशार्चितपादपद्मश्रीपार्श्वनाथप्रभुसन्तानीयगाङ्गेयपरमर्षिभिरयं सर्वज्ञो न वेति प्रत्ययनार्थं श्रीमत्त्रैशलेयतीर्थकृतां नरकादिगतावेकद्व्यादिजीवप्रवेशानाश्रित्य नानाविधपृष्टभङ्गा वरीवर्त्तन्ते, तत उद्धृत्य श्रीमन्मेघपण्डितान्तेवासिपं–श्रीविजयगणिभिः संक्षिप्तभङ्गयुतं नष्टोद्दिष्टस्वरूपमयमेतत्प्रकरणं व्यरचि । प्रकरणेऽस्मिन्प्रकरणप्रणेतृभिश्चतुर्विंशतितमायां गाथायामेतत्प्रकरणाध्ययनश्रवणफलं घोरामयाभुग्नेदापवर्गप्राप्तिर्जायेत इत्युदितमतः सर्वैर्भव्यसत्त्वैरवश्यमध्येतव्यं श्रोतव्यञ्च ।

प्रकरणस्यास्य प्रणेतारः क्व गच्छे? कस्मिन् समये चासन्? कदा चैतत्प्रकरणं विहितं? इत्यादि निर्णेतुमद्यावधि नैवाशक्नुवम् ।

एतत्प्रकरणस्य प्रतिकृतिप्रुफादिकञ्च संशोधितं मदीयचिगुरु–श्रीमत्प्रेमविजयपूज्यैः, अतस्तेषां महाशयानां हार्दिक-धन्यवादपुरस्सरमुपकारं मन्ये ।

अस्य संशोधनकर्म्मणि त्रीणि पुस्तकानि समुपलब्धानि, तेष्वाद्ये द्वे पुस्तके उपाध्यायपदालङ्कृतानामस्मद्गुरुवर्य्यगुरूणां श्रीमद्वीरविजयपूज्यपादानां सत्के । नङ्कयन्त्रयुतं तृतीयं पुनः पन्न्यास–श्रीमन्मेघविजयमुनिवराणां सत्कं । एतत्पुस्तकत्रयाधारेण प्रमार्जितेऽस्मिन्निबन्धे यत्र क्वचन दृष्टिदोषान्मतिमान्द्यादक्षरयोजकदोषाद्वा स्खलनं जातं भवेत्तत्र परिष्कृत्य वाचनीयं धीधनैः सज्जनैरित्याकाङ्क्षति विद्वज्जनकृपाकाङ्क्षी अनुयोगाचार्य्य–पूज्यपाद–श्रीमद्दानविजय–गणिपुङ्गवाणुविनेयो मङ्गलविजयो मुनिः । श्रीमद्विजयकमलसूरिराज्ये प्रवर्त्तमाने ।

वीरसंवत्–२४४१ आषाढकृष्णैकादश्यां } सीनोर. (रेवाकांठा)

॥ अर्हम् ॥

॥ न्यायाम्भोनिधि-प्रतिज्ञापराजूतवादिवृन्द-श्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

श्रीमन्मेघपण्डितान्तेवासिपं-श्रीविजयगणिविरचितं अवचूरिसमेतं

# गाङ्गेयभङ्गप्रकरणम् ।

वंदित्तु वद्धमाणं, गंगेअसुपुछभंगपरिमाणं । इगजोगे सगभंगा, दुगजोगे भंगइगवीसा ॥ १ ॥

व्याख्या—"वंदित्तु त्ति" वन्दित्वा वर्द्धमानं गाङ्गेयपृष्टभङ्गपरिमाणं कथ्यत इति। "इगजोगे" असंयोगे भङ्गाः सप्त सप्त भवन्ति सप्तसु नरकेषु, एकस्मिन्नेकस्मिन् द्विकसंयोगे भङ्गाः २१-२१, तद्यथा—प्रथमद्वितीययोः १, प्रथमतृतीययोः २ प्रथमचतुर्थ्योः ३, प्रथमपञ्चम्योः ४, प्रथमपष्ठ्योः ५, प्रथमसप्तम्योः ६, द्वितीयतृतीययोः ७, द्वितीयचतुर्थ्योः ८, द्वितीयपञ्चम्योः ९, द्वितीयपष्ठ्योः १०, द्वितीयसप्तम्योः ११, इत्यादिभङ्गप्रस्तारवशाज्ज्ञेयं। प्रथमनरकेण सह भङ्गाः ६, द्वितीयेन सह भङ्गाः ५, तृतीयेन सह ४, चतुर्थेन सह ३, पञ्चमेन सह २, पष्ठेन सह १, एवं २१ ॥ १ ॥

तिग भङ्गजोगे पत्तेअ भंगपणतीस पंचसंजोए । इगवीस य छज्जोए, सगभंगा सत्तए एगो ॥ २ ॥

इग पंचगसंजोगो, बपवेसे पंच हुंति डुगजोगा। तिगजोगा दस चेव य, चउक्कसंजोग दस एव ॥ ७ ॥

व्याख्या—पञ्चकसंयोग एक एव, तद्यथा—

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |

। षट्प्रवेशे पञ्च द्विक संयोगा भवन्ति, तद्यथा—

| | |
|---|---|
| १ | ५ |
| २ | ४ |
| ३ | ३ |
| ४ | २ |
| ५ | १ |

त्रिकसंयोगा दश भवन्ति, स्थापना चेयं—

| | | |
|---|---|---|
| १ | १ | ४ |
| १ | २ | ३ |
| २ | १ | ३ |
| १ | ३ | २ |
| २ | २ | २ |
| ३ | १ | २ |
| १ | ४ | १ |
| २ | ३ | १ |
| ३ | २ | १ |
| ४ | १ | १ |

। चतुष्कसंयोगा दश भवन्ति, तद्यथा—

| | | | |
|---|---|---|---|
| १ | १ | १ | ३ |
| १ | १ | २ | २ |
| १ | २ | १ | २ |
| २ | १ | १ | २ |
| १ | १ | ३ | १ |
| १ | २ | २ | १ |
| २ | १ | २ | १ |
| १ | ३ | १ | १ |
| २ | २ | १ | १ |
| ३ | १ | १ | १ |

संयोगोत्पादन उपायमाह—यथा दश- प्रवेशेऽधस्तात् बहवः स्थाप्यन्ते,
अष्टादयः ( सप्तादयः ) उपरि एक एकः स्थाप्यते, यथा—चतुःसंयोगे $\frac{४-५-६-७}{१-१-१-७}$
एष प्रथमो भङ्गः। पश्चादूर्ध्वमुखं भङ्गाः सञ्चार्यन्ते, १–१–२–६, एष द्वितीयः संयोगः।
१–२–१–६, एष तृतीयः संयोगो भवति। २–१–१–६, एष चतुर्थः संयोगः। ततः पश्चादु-
परिस्थ एको निवर्त्तते स च, पएमध्या- देकश्च, द्वावप्येकत्र कृत्वा द्वितीयस्थाने
सञ्चार्यते, स्थापना—१–१–३–५, एष पञ्चमः संयोगः। ततो द्वितीयस्थानात् एकोऽग्रे सञ्चा-
र्यते १–२–२–५, ततोऽप्यूर्ध्वमेकः सञ्चार्यते, २–१–२–५, तत उपरिस्थ एको निवर्त्तते
स च, द्वितीयस्थानमध्यादेकश्च, द्वावपि तृतीये स्थाने सञ्चार्यंते १–३–१–५, एष अष्टमः संयोगः। एवमूर्ध्वमुखाः
सञ्चार्यन्ते सर्वोपरि गत्वा निवर्त्तन्ते, अधस्तात् द्विकादयो यत्र वर्त्तन्ते तन्मध्यादेकेन सहोर्ध्वस्थाने सञ्चार्यन्ते,
ततोऽप्यूर्ध्वमेवं तावत्कर्त्तव्यं यावद्बहवः उपरिस्था भवन्ति, अन्यत्र एक एक एवेति ७–१–१–१, एष चरमो भङ्गः,
इत्थं संयोगा उत्पाद्याः ॥ ७ ॥

पणसंजोगा पंच य, छस्संजोगो अ होइ इग्रु चेव । सत्तपवेसि डुजोए, संजोगा इत्थ ठच्चेव ॥ ८ ॥

व्याख्या—"पणसंजोग त्ति" पञ्चसंयोगाः पञ्च जवन्ति । सर्वत्र संयोगाः प्रस्तारवशाज्ज्ञातव्याः, ते चेमे पञ्चकसंयोगाः—

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | २ |
| १ | १ | १ | २ | १ |
| १ | १ | २ | १ | १ |
| १ | २ | १ | १ | १ |
| २ | १ | १ | १ | १ |

षट्संयोग एक एव

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ |

। सप्तप्रवेशे द्विकसंयोगाः षट्,तद्यथा—

| | |
|---|---|
| १ | ६ |
| २ | ५ |
| ३ | ४ |
| ४ | ३ |
| ५ | २ |
| ६ | १ |

॥८॥

तिगसंजोगा पणरस, वीसा पुण हुँति चउक्कसंजोगा ।
पणसंजोगा पणरस, छज्जोगा हुंति छच्चेव ॥ ए ॥

व्याख्या—त्रिकसंयोगाः पञ्चदश । संयोगप्रस्ताराज्ज्ञातव्याः । चतुःसंयोगा विंशतिर्जवन्ति । पञ्चसंयोगाः पञ्चदश जवन्ति । षट्संयोगाः षड् जवन्ति ॥ ए ॥

सगजोगे इग जंगो, अठ्ठपवेसे डुजोग सत्तेव । तिगजोगे इगवीस य, चउजोगे हुंति पणतीसा ॥ १० ॥

व्याख्या—सप्तसंयोगे जवति एकः,संयोगप्रस्ताराज्ज्ञातव्यः—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | १ |

।अष्टप्रवेशे द्विकसंयोगाः सप्त, तद्यथा–

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ |
| ७ | ६ | ५ | ४ | ३ | २ | १ |

त्रिकसंयोगा एकविंशतिर्जङ्गा जवन्ति । चतुर्योगे पञ्चत्रिंशद्भङ्गा जवन्ति, तद्यथा—एककेन

संयोग एक, द्वितीयाङ्केन ३, द्विकत्रिकाभ्यां ६, द्विकत्रिकचतुष्कैः १०, द्विकत्रिकचतुष्कपञ्चकैः १५, एवं ३५ संयोगा भवन्ति ॥ १० ॥

**पणजोए पणतीसा, इगवीस छजोग सत्त सगजोए। नवपविसि अरू डुजोगा, तिग संजोगा य अरूवीसा ११**

व्याख्या—पञ्चकसंयोगे पञ्चत्रिंशद् ३५, एककेन १, द्विकेन ४, द्विकत्रिकाभ्यां १०, द्विकत्रिकचतुष्कैः २०, एवं ३५ भवन्ति। एकविंशतिः षट्संयोगे, एकेन संयोगः १, द्विकेन ५, द्विकत्रिकाभ्यां १५। सप्तसंयोगे सप्त भङ्गाः, तद्यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | २ |
| १ | १ | १ | १ | १ | २ | १ |
| १ | १ | १ | १ | २ | १ | १ |
| १ | १ | १ | २ | १ | १ | १ |
| १ | १ | २ | १ | १ | १ | १ |
| १ | २ | १ | १ | १ | १ | १ |
| २ | १ | १ | १ | १ | १ | १ |

नवप्रवेशेऽष्टौ द्विकसंयोगाः, तद्यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ७ | ९ | ६ | ५ | ४ | ३ | २ | १ |
| १ | २ | ३ | ४ | ५ | ६ | ९ | ७ |

त्रिकसंयोगाः २८ ॥ ११ ॥

**छप्पन्ना चउजोगे, सत्तरि हवई अ पंचसंजोए।**
**छप्पन्ना छज्जोए, अरूवीसा सत्तसंजोआ ॥ १२ ॥**

व्याख्या—चतुर्योगे षट्पञ्चाशद् भङ्गा भवन्ति। पञ्चसंयोगाः सप्ततिः, षट्संयोगाः षट्पञ्चाशत्, सप्तसंयोगा २८ अष्टाविंशतिरेवं सर्वत्र संयोगप्रस्ताराज्ज्ञातव्याः ॥ १२ ॥

दसगपवेसे नव डुगसंजोगा तिन्निजोग छत्तीसा। चउसंजोगा चुलसी पणजोग सयं च छव्वीसं ॥ १३ ॥

व्याख्या—दशकप्रवेशे नव द्विकसंयोगा भवन्ति, तद्यथा—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |

। त्रिकसंयोगाः ३६ षट्त्रिंशद्भवन्ति। चतुष्कसंयोगाः ८४। पञ्चकसंयोगाः १२६ ॥ १३ ॥

छज्जोगे १२६ छव्वीसं, सत्तगजोगे हवंति चुलसीई। एवं भंगपरूवण, कहिआ तेलोकदंसीहि ॥ १४ ॥

व्याख्या—षट्संयोगे १२६ संयोगा भवन्ति। शतशब्दोऽत्रापि[1] योज्यः। सप्तसंयोगे ८४ भङ्गा ज्ञातव्याः ॥ १४ ॥

भंगा अहोमुहा खलु चारेअव्वा य अग्गअग्गउ चेव। संजोगा उड्ढमुहा डुतिचउपंचाइ पिहु चेव ॥ १५ ॥

व्याख्या—भङ्गा अधोमुखाश्चार्याः, "अग्गअग्गउ त्ति" अग्रेतना अग्रेतना अङ्का अग्रतोऽग्रतः सञ्चार्याः, संयोगास्तूर्द्ध्वमुखा उपर्युपरि सञ्चार्याः, संयोगप्रस्तारवशाज्ज्ञातव्याः। "डुतिचउ" इत्यादि ॥ १५ ॥

डुगजोगे एगेगो, तिजोगि हुंति अ इगाइ अंता।चउजोगि इग ति छ दस पणरस इगवीस अडवीसा१६

व्याख्या—द्विकसंयोग एककेन सह भङ्ग एक एव, द्विकेन सह संयोग एकः, एवं त्रिकेन १, चतुष्केण १, पञ्चकेन १, षट्केन १, सप्तकेन १, अष्टकेन १, नवकेन १ एक एव संयोग उत्पद्यते। त्रिकसंयोग एककेन सह १, द्विकेन सह संयोगौ २, त्रिकत्रिकाभ्यां ३, द्विकत्रिकचतुष्कैः ४, द्विकत्रिकचतुष्कपञ्चकैः ५, द्विकत्रिकचतुष्कपञ्चकषट्कैः ६, द्विकादिस-

---

१ शतशब्दः पूर्वगाथातो योज्य ।

सान्तैः ७, एवं द्विकाद्यष्टान्तैः ८, एवमूर्ध्वमूर्ध्वं सञ्चार्यमाणानां संयोगा लभ्यन्ते ३६। चतुष्कसंयोग एककेन भङ्गः १, द्विकेन ३, द्विकत्रिकाभ्यां षट्, एवं द्विकादिचतुष्कान्तैः १०, पञ्चान्तैः १५, षष्ठान्तैः २१, सप्तान्तैः २८, सर्वे ८४ भवन्ति ॥ १६॥

**चउ दस वीस पणतीसा, छप्पन्न पणजुगि छसगजोआ। पण पणरस पणतीसा, सयरि छ इगवीस छप्पन्ना॥१७**

व्याख्या—पञ्चकसंयोग एककेन सह १, द्वितीयाङ्केन सह ४, द्विकत्रिकाभ्यां १०, द्विकादिचतुष्कान्तैः २०, द्विकादिपञ्चकान्तैः ३५, द्विकादिषट्कान्तैः ५६, सर्वे १२६। षट्संयोग एककेन सह १, द्विकेन सह ५, द्विकत्रिकाभ्यां १५, एवं द्विकादिचतुष्कान्तैः ३५, द्विकादिपञ्चकान्तैः ७०, सर्वे १२६। सप्तसंयोगे एककेन सह १, द्विकेन ६, द्विकत्रिकाभ्यां २१, द्विकत्रिकचतुष्कैः सञ्चार्यमाणैः सह ५६, सर्वे ८४ ॥ १७ ॥

**संजोगगुणिअभंगा, कायवा सवमेव परिमाणं। उत्तरभंगाणं इह, णद्दिट्ठा य कायवा ॥ १८ ॥**

व्याख्या—संयोगगुणिता भङ्गाः कर्त्तव्याः, उत्तरभङ्गानां सर्वं परिमाणं भवेत्, तद्यथा—एकप्रवेशे भङ्गाः ७, द्विप्रवेशेऽसंयोगे भङ्गाः ७, द्विकसंयोग एक एव, द्विकसंयोगे भङ्गाः २१, तैरेको गुणितस्तावन्त एव भवन्ति २१, सर्वे २८। त्रिप्रवेशेऽसंयोगे भङ्गाः ७, द्विकसंयोगौ द्वौ, तौ भङ्गैरेकविंशत्या गुणितौ जाताः ४२, त्रिकसंयोग एक एव, भङ्गाः ३५ तैर्गुणितः भङ्गाः ३५ भवन्ति, सर्वे ८४। चतुःप्रवेशे असंयोगे ७, द्विकसंयोगाः ३ भङ्गैरेकविंशत्या गुणिता जाताः ६३, त्रिकसंयोगाः ३ भङ्गैः पञ्चत्रिंशता गुणिताः १०५, चतुःसंयोग एक एव पञ्चत्रिंशता गुणिता जाताः ३५, सर्वे २१०। पञ्चकप्रवेशेऽसंयोगे ७, द्विकसंयोगाः ४ भङ्गैरेकविंशत्या गुणिता जाताः ८४, त्रिकसंयोगाः ६ पञ्चत्रिंशता गुणिताः २१०, चतुःसंयोगाः ४ पञ्च-

उद्धरिताः १५, एकविंशतितमो भङ्गोऽत्र साधारणपतितः, त्रिभिः साधारणः पञ्चमषष्ठसप्तमसाधारणपतितोऽत एकविंशतिमध्यादेको निष्कास्यते पृथक् क्रियते पञ्चत्रिंशद्भङ्गाः पञ्चदशभिरुद्धरितैर्मीलिता जाताः ५० त्रिसाधारण इति त्रिभिर्भक्ताः १६ षोडश संयोगा उद्धरितौ द्वौ सप्तदशसंयोगे द्वितीयो भङ्गः, किमुक्तं भवति ? विंशतिर्भङ्गा गता उपरि षोडशसंयोगाः सप्तदशसंयोगे द्वितीयो भङ्गो वर्त्तते, द्वितीये नरके १, तृतीये ४, चतुर्थे १, षष्ठे २, सैकोनचत्वारिंशत्कषोडशशततमोऽयं भङ्ग ईदृशो भवति इति कथनीयं, चशब्दादादावपि साधारणा भङ्गाः पतितास्तदा तेऽपि भङ्गा यावद्भिः साधारणास्तैर्भज्यन्ते, यथा—अष्टप्रवेशे द्विकसंयोगे षट् साधारणा भङ्गा भवन्ति, तदा षड्भिर्ह्रियंते, यथा—केनापि पृष्टं, अष्टप्रवेशे द्विकसंयोगे चत्वारिंशत्तमो भङ्गः स कीदृशो भवति ? तदा षट् साधारणत्वात् षड्भिर्भज्यते, लब्धाः ६, उद्धरिताः ४, तदा कथनीयं षट्संयोगा अतीताः सप्तमे संयोगे चतुर्थो भङ्गो वर्त्तते (प्रथमे) ७ (पञ्चमे) १ इति कथनीयमित्यादि ज्ञातव्यम् ॥ २१ ॥

॥ इति नष्टकरणम् ॥

अथोद्दिष्टकरणमाह—

**उद्दिठ तीअभंगा, संजोगगुणा य सहिअ संजोगा। उद्दिठभंगसंखा इअ कहिआ धीरपुरिसेहिं ॥ २२ ॥**

व्याख्या—"उद्दिठ त्ति" उद्दिष्टे सति ये पूर्वं भङ्गा अतीतास्त एकत्र करणीयाः, वर्त्तमाने संयोगे ये भङ्गास्तेऽपि तैः संयोगैर्गुणाः कर्त्तव्याः किमुक्तं भवति ? वर्त्तमानाद्भङ्गात्पूर्वं ये भङ्गा गतास्ते भङ्गास्तत्सम्बन्धिभिः संयोगैर्गुणाः कर्त्तव्याः,

वर्त्तमाने भङ्गे ये संयोगास्तेऽपि, ते त्रयोऽपि, भेदा एकत्र करणीयाः, एवं कृते सति या सङ्ख्या भवति, तत्सङ्ख्यो भङ्ग इति उद्दिष्टभङ्गसङ्ख्या धीरपुरुषैः कथिताः ॥ २२ ॥

**जइ भंगयसाहारणसंजोगा जे अ तेहिं गुणिऊण । सेसे भंगे मेलिअ एगीकाऊण सव्वग्गं ॥ २३ ॥**

व्याख्या—"जइ त्ति" यदि भङ्गकसाधारणसंयोगाः येऽतीता गतास्तान् संयोगान् तैः साधारणभङ्गैर्द्वित्रिचतुरादि-साधारणभङ्गैर्गुणयित्वा 'शेषान्' वर्त्तमानसम्बन्धिन उत्तरभेदान् मेलयित्वा पश्चात्पूर्वमुत्पन्नान् भङ्गान् भङ्गकसाधारणसंयोगार्थैकीकृत्य वक्तव्यमेतावत्सङ्ख्याकोऽयं भङ्गः। अष्टप्रवेशमाश्रित्योदाहरणमाह—केनापि पृष्टं, $\frac{२-४-६-७}{४-१-१-२}$ अयं भङ्गः कतिथः? तदा गणनीयं, गणने एकोनत्रिंशत्तमोऽयं भङ्गो वर्त्तते, कथं? अष्टाविंशतिर्भङ्गा गतास्ते संयोगगुणाः कर्त्तव्याः पञ्चत्रिंशद्गुणाः कर्त्तव्याः, गुणनाज्जाताः ९८०, त्रिंशतितमः संयोग एकोनत्रिंशत्तमे भङ्गे वर्त्तते, एकत्र करणे जातं सहस्रं पूर्वं येऽतीता ते असंयोगे ७, द्विकसंयोगे १४७, त्रिकसंयोगे ७३५, सर्वं एकीकरणे जातानि भङ्गानां १८८९ अष्टादशशतान्येकोननवतिश्च, तदा कथनीयं सैकोननवत्यष्टादशशततमो भङ्गः। यदा केनचित्पृष्टमयं $\frac{२-३-४-६}{१-४-१-२}$ भङ्गः कतिथः? तदाऽत्र भङ्गाः २० गताः, संयोगैर्गुणिताः ( ३५ गुणिताः ) जाताः ७०० एकविंशतितमे भङ्गे षोडशसंयोगा अतीता गतास्ते त्रिसाधारणत्वात् त्रिभिर्गुणिता जाताः ४८ सप्तदशे संयोगे द्वितीयो भङ्गस्ताभ्यां सह जाताः ५० सप्तशतैः सह जातानि सार्द्धानि सप्तशतानि ७५० पूर्वमसंयोगे ७ द्विसंयोगे १४७ त्रिकसंयोगे ७३५ अतीतास्तेऽपि ८८९ मध्ये क्षेप्याः सर्वे जातानि सैकोनचत्वारिंशत्कषोडशशतानि तदा कथनीयमयं सैकोनचत्वारिंशत्कषोडशशततमो भङ्गः। तृतीयमुदाहरणं,

तृ-पं-ष-स-३४, च-पं-ष-स-३५। पञ्चकसंयोगे भङ्गाः २१, प्र-द्वि-तृ-च-पं-१, प्र-द्वि-तृ-च-ष-२, प्र-द्वि-तृ-च-स-३, प्र-द्वि-तृ-पं-ष-४, प्र-द्वि-तृ-पं-स-५, प्र-द्वि-तृ-ष-स-६, प्र-द्वि-च-पं-ष-७, प्र-द्वि-च-पं-स-८, प्र-द्वि-च-ष-स-९, प्र-द्वि-पं-ष-स-१०, प्र-तृ-च-पं-ष-११, प्र-तृ-च-पं-स-१२, प्र-तृ-च-ष-स-१३, प्र-तृ-पं-ष-स-१४, प्र-च-पं-ष-स-१५, द्वि-तृ-च-पं-ष-१६, द्वि-तृ-च-पं-स-१७, द्वि-तृ-च-ष-स-१८, द्वि-तृ-पं-ष-स-१९, द्वि-च-पं-ष-स-२०, तृ-च-पं-ष-स-२१ । षट्कसंयोगे भङ्गाः ७, प्र-द्वि-तृ-च-पं-ष-१, प्र-द्वि-तृ-च-पं-स-२, प्र-द्वि-तृ-च-ष-स-३, प्र-द्वि-तृ-पं-ष-स-४, प्र-द्वि-च-पं-ष-स-५, प्र-तृ-च-पं-ष-स-६, द्वि-तृ-च-पं-ष-स-७ । सप्तसंयोगे भङ्गः १, प्र-द्वि-तृ-च-पं-ष-स-१ ।

"अथ संयोगप्रस्तारो लिख्यते"—एकस्य प्रवेशे भङ्गाः ७, १—१—१—१—१—१—१। द्विप्रवेशेऽसंयोगिकभङ्गाः ७। द्विकसंयोगिकभङ्गः १,

| |
|---|
| १ |
| १ |

। त्रिकप्रवेशेऽसंयोगिकभङ्गाः ७। द्विकसंयोगिकौ भङ्गौ

| | |
|---|---|
| २ | १ |
| १ | २ |

। त्रिकसंयोगिक एक एव भङ्गः

| | | |
|---|---|---|
| १ | १ | १ |

। चतुःप्रवेशेऽसंयोगिकभङ्गाः ७। द्विकसंयोगिकभङ्गास्त्रयः, स्थापना चेयं—

| | | |
|---|---|---|
| ३ | २ | १ |
| १ | २ | ३ |

। त्रिकसंयोगिभङ्गास्त्रयः, स्थापना चेयं—

| | | |
|---|---|---|
| २ | १ | १ |
| १ | २ | १ |
| १ | १ | २ |

। चतुष्कसंयोग एक एव, स्थापना चेयं—

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |

। पञ्चकप्रवेशेऽसंयोगिकभङ्गाः ७। द्विकसंयोगिभङ्गाः ४, स्थापना—

| | | | |
|---|---|---|---|
| ४ | ३ | २ | १ |
| १ | २ | ३ | ४ |

। त्रिकसंयोगिभङ्गाः ६,—

| | | | | | |
|---|---|---|---|---|---|
| ३ | २ | २ | १ | १ | १ |
| १ | २ | १ | ३ | २ | १ |
| १ | १ | २ | १ | २ | ३ |

चतुष्कसंयोगाः४स्थापना-

| | | | |
|---|---|---|---|
| १ | १ | १ | २ |
| १ | १ | २ | १ |
| १ | २ | १ | १ |
| २ | १ | १ | १ |

। पञ्चकसंयोगे एक एव,

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |

। षट्प्रवेशेऽसंयोगिकज्ञङ्गाः ७। द्विकसंयोगिकज्ञङ्गाः ५, स्थापना-

| | |
|---|---|
| १ | ५ |
| २ | ४ |
| ३ | ३ |
| ४ | २ |
| ५ | १ |

। त्रिकसंयोगिकज्ञङ्गाः १०-

| | | |
|---|---|---|
| १ | १ | ४ |
| १ | २ | ३ |
| २ | १ | ३ |
| १ | ३ | २ |
| २ | २ | २ |
| ३ | १ | २ |
| १ | ४ | १ |
| २ | ३ | १ |
| ३ | २ | १ |
| ४ | १ | १ |

चतुष्कसंयोगिकज्ञङ्गाः १०,-

| | | | |
|---|---|---|---|
| १ | १ | १ | ३ |
| १ | १ | २ | २ |
| १ | २ | १ | २ |
| २ | १ | १ | २ |
| १ | १ | ३ | १ |
| १ | २ | २ | १ |
| २ | १ | २ | १ |
| १ | ३ | १ | १ |
| २ | २ | १ | १ |
| ३ | १ | १ | १ |

।पञ्चकसंयोगे ज्ञङ्गाः ५-

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | २ |
| १ | १ | १ | २ | १ |
| १ | १ | २ | १ | १ |
| १ | २ | १ | १ | १ |
| २ | १ | १ | १ | १ |

षट्संयोग एक एव ज्ञङ्गः१-

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ |

। सप्तप्रवेशेऽसंयोगिकज्ञङ्गाः७। सप्तप्रवेशे द्विकसंयोगिकज्ञङ्गाः ६,

| | |
|---|---|
| १ | ६ |
| २ | ५ |
| ३ | ४ |
| ४ | ३ |
| ५ | २ |
| ६ | १ |

।

सप्तप्रवेशे त्रिकसंयोगिज्ञङ्गाः १५.

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ | १ | २ | ३ | ४ | ५ |
| १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ | ५ | ४ | ३ | २ | १ |
| ५ | ४ | ४ | ३ | ३ | ३ | २ | २ | २ | २ | १ | १ | १ | १ | १ |

सप्तप्रवेशे चतुष्कसंयोगिज्ञङ्गाः २०.

| | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ |
| १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ |
| १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | ४ | ३ | ३ | २ | २ | २ | १ | १ | १ | १ |
| ४ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |

नवप्रवेशे पञ्चसंयोगिजाङ्काः ७०.

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ |
| १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ |
| १ | १ | २ | १ | १ | १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | ४ | ३ | ३ | २ | २ | २ | १ | १ | १ | १ |
| १ | २ | १ | १ | १ | ३ | २ | २ | २ | १ | १ | १ | १ | १ | १ | ४ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| ५ | ४ | ४ | ४ | ४ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ |

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | २ | १ | २ | १ | १ | २ | ३ | ४ | १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ | १ | २ | ३ | ४ | ५ |
| १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ | ५ | ४ | ३ | २ | १ |
| १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | ४ | ३ | ३ | २ | २ | २ | १ | १ | १ | १ | ५ | ४ | ४ | ३ | ३ | ३ | २ | २ | २ | २ | १ | १ | १ | १ | १ |
| ५ | ४ | ४ | ४ | ३ | ३ | ३ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |

## नवप्रवेशे षट्संयोगिजङ्काः ५६.

| | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | २ | १ | १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | १ | १ | २ | १ | १ |
| १ | १ | १ | १ | २ | १ | १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | १ | १ | २ | १ | १ | १ |
| १ | १ | १ | २ | १ | १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | १ | १ | २ | १ | १ | १ | २ |
| १ | १ | २ | १ | १ | १ | १ | २ | १ | १ | १ | ३ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | २ | १ | १ | १ | ३ | २ |
| १ | २ | १ | १ | १ | १ | ३ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | ४ | ३ | ३ | ३ | ३ | २ | २ |
| ४ | ३ | ३ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ |

| | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ |
| २ | १ | १ | २ | १ | ३ | २ | १ | १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ |
| १ | १ | ३ | २ | २ | १ | १ | १ | १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | ४ | ३ | ३ | २ | २ | २ | १ | १ | १ | १ |
| २ | २ | १ | १ | १ | १ | १ | १ | ४ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| २ | २ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |

नवमप्रवेशे सप्तसंयोगिजङ्काः २८.

| | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | २ | १ | १ | १ | १ | १ | २ | १ | १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ |
| १ | १ | १ | १ | १ | २ | १ | १ | १ | १ | १ | २ | १ | १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ |
| १ | १ | १ | १ | २ | १ | १ | १ | १ | १ | २ | १ | १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ |
| १ | १ | १ | २ | १ | १ | १ | १ | १ | २ | १ | १ | १ | १ | २ | १ | १ | १ | ३ | २ | २ | २ | १ | १ | १ | १ | १ | १ |
| १ | १ | २ | १ | १ | १ | १ | १ | २ | १ | १ | १ | १ | ३ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| १ | २ | १ | १ | १ | १ | १ | ३ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| ३ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |

दशकप्रवेशेऽसंयोगिजङ्काः १। दशकप्रवेशे द्विकसंयोगिजङ्काः ९

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |

दशकप्रवेशे त्रिकसंयोगिजङ्काः ३६.

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ | १ | २ | ३ | ४ | ५ | १ | २ | ३ | ४ | ५ | ६ | १ | २ | ३ | ४ | ५ | ६ | ७ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ | ५ | ४ | ३ | २ | १ | ६ | ५ | ४ | ३ | २ | १ | ७ | ६ | ५ | ४ | ३ | २ | १ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
| ८ | ७ | ७ | ६ | ६ | ६ | ५ | ५ | ५ | ५ | ४ | ४ | ४ | ४ | ४ | ३ | ३ | ३ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ |

## दशकप्रवेशे चतुष्कसंयोगिभङ्गाः ८४.

| | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ | १ | १ | २ | १ | २ | ३ | १ | २ |
| १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ |
| १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | ४ | ३ | ३ | २ | २ | २ | १ | १ | १ | १ | ५ | ४ | ४ | ३ | ३ | ३ | २ | २ |
| ७ | ६ | ६ | ६ | ५ | ५ | ५ | ५ | ५ | ५ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ |

| | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३ | ४ | १ | २ | ३ | ४ | ५ | १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ | १ | २ | ३ | ४ | ५ | १ | २ | ३ | ४ | ५ | ६ |
| २ | १ | ५ | ४ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ | ५ | ४ | ३ | २ | १ | ६ | ५ | ४ | ३ | २ | १ |
| २ | २ | १ | १ | १ | १ | १ | ६ | ५ | ५ | ४ | ४ | ४ | ३ | ३ | ३ | ३ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ |
| ३ | ३ | ३ | ३ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ |

| | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ | १ | २ | ३ | ४ | ५ | १ | २ | ३ | ४ | ५ | ६ | १ | २ | ३ | ४ | ५ | ६ | ७ |
| १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ | ५ | ४ | ३ | २ | १ | ६ | ५ | ४ | ३ | २ | १ | ७ | ६ | ५ | ४ | ३ | २ | १ |
| ७ | ६ | ६ | ५ | ५ | ५ | ४ | ४ | ४ | ४ | ३ | ३ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ |
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |

## दशकप्रवेशे पञ्चसंयोगिजाङ्काः १२६.

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | २ | १ | २ | ३ | १ |
| १ | १ | १ | २ | १ | १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ |
| १ | १ | २ | १ | १ | १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | ४ | ३ | ३ | २ | २ | २ | १ |
| १ | २ | १ | १ | १ | ३ | २ | २ | २ | १ | १ | १ | १ | १ | १ | ४ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ |
| ६ | ५ | ५ | ५ | ५ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ |

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | ३ | ४ | १ | १ | १ | २ | १ | १ | २ | १ | २ | ३ | १ | १ | २ | १ | २ | ३ | १ | २ | ३ | ४ | १ | १ | २ | १ | २ | ३ | १ | २ | ३ |
| ३ | २ | १ | १ | १ | २ | १ | १ | २ | १ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ | २ | १ | १ | २ | १ | ३ | २ | १ | ४ | ३ | २ |
| १ | १ | १ | १ | २ | १ | १ | ३ | २ | २ | १ | १ | १ | ४ | ३ | ३ | २ | २ | २ | १ | १ | १ | १ | ५ | ४ | ४ | ३ | ३ | ३ | २ | २ | २ |
| १ | १ | १ | ५ | ४ | ४ | ४ | ३ | ३ | ३ | ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| ३ | ३ | ३ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ |

Published by Vallabhadas Tribhuvanadas Gandhi Secretary Jain Atmananda Sabha Bhavnagar.



Printed by Ramchandra Yesu Shedge, Nirnaya-Sagar Press, 23, Kolbhat Lane, Bombay.

॥ ॐ परमात्मने नमः ॥

शान्तमूर्त्तिशमाम्भोनिधि–श्रीमद्विजयसिद्धिसूरीशेभ्योनमः

## ग्रन्थकारपरिचयः ॥

सुविज्ञातमेतत्खलु विश्वेषां विदुषां यन्निस्सीमदौर्भाग्यप्राग्भारप्रतिदिनापचीयमानविशदशेमुषीवैभवभरे निरवधिकमिथ्याहंयुतासुरापानविघूर्णन्नयनयुगलकुवादिकौशिकयूथघूत्कारभीषणेऽस्मिन् कलावनेकपण्डिताभासोपकल्पितानल्पयुतत्त्वविकल्पकल्पनाजालदोलायमानमानसानां निखिलजनानां विशुद्धतरतत्त्वज्ञानावाप्तये विराजन्तेऽमलरत्नानीव सुदृढालम्बनीभूतत्वेन प्राक्तनमहापुरुषप्रणीता दिव्यग्रन्थाः, तानन्तरेण नाद्ययावत् कस्यापि सञ्जाता सञ्जनिष्यते वा स्वाभीप्सितकार्यनिष्पत्तिः। यतो न दृश्यते, न चापि श्रूयते क्वापि कारणं विहाय कार्योत्पत्तिः। यत्र कुत्रापि वयं दृष्टिं क्षिपामस्तत्र सर्वत्र कारणमपेक्ष्यैव कार्याणामुद्भूतिं पश्यामः। एवं प्रकृतविषयेऽपि तत्त्वज्ञानकार्यावाप्तौ महापुरुषप्रणीतग्रन्थानामस्त्येव मुख्यहेतुत्वमिति निर्धारयामि सम्यक्। अत एव च वर्तमानसमये प्रकटयितुं तानहर्निशं पवित्रार्हच्छासनसेवाकरणबद्धकटीतटैर्मुनिजनोपदेशप्रोज्जृम्भमाणद्विगुणितोत्साहैर्धर्मवीरैः सद्गृहस्थशेखरैः समस्थापिपतानेकाः संस्थाः। ताभ्यश्चानेका ग्रन्थाः प्रकट्यभूवन्। निपीय तानसकृन्नेत्रपुटैरुद्गच्छद्द्हलपुलकजालाङ्कुरितगात्रयष्टयो जायन्ते विद्वन्मणयः। उत्सहन्ते च पुनर्नवनवकुसुममकरन्दावलेहनलोलुपभ्रमरगणा इव नवनवान् ग्रन्थान् द्रष्टुमतस्तन्मनोरथान्

ग्रन्थकार-
परिचयः ॥

नयोपदेशनामा नयामृततरङ्गिण्याख्य-
पूरयितुं निखिलविबुधजनतारकतारापतिवाचकश्रीमद्यशोविजयगणिनिर्मितो नयोपदेशनामा नयामृततरङ्गिण्याख्य-
व्याख्यासनाथो नवीनग्रन्थोऽयमसद्धर्मारमणीयवासनातिमिरपटलान्धजननयनोद्घाटनेऽञ्जनशलाकोपमः प्रकटय्य निधी-
यते तत्पुरतः । विलोक्येमं विस्मयस्मेरलोचनास्ते समकालमेव'ननु कोऽयमस्य ग्रन्थस्य प्रणेता श्रीमान् यशोविज-
यमहोपाध्यायः ? कस्यां शताब्द्यामिदं महीमण्डलमलञ्चक्रे स्वकीयसुकुमारचरणारविंदविन्यासैः ? कथंकारमाससादे-
दृशीं लोकोत्तरचमत्कारकारिणीं विद्यां ? कथं च लेभे न्यायविशारदेति विरुदं ?' इत्यादिसन्देहदोलान्दोलितहृदया
भविष्यन्तीति तत्संदेहापनोदनमवश्यमेव कर्तुमुचितम्, परं हन्त ! संकुचाम्यतितरामत्र विषये सामस्त्येन किमपि
लिखितुं, यतो विहितेऽपि गरीयसि प्रयासे नोपलभ्यते क्वापि तन्महात्मनस्तथाविधलिखितवृत्तान्तोऽधुना, तथा तत्तुल्य-
कालीनेषु सत्स्वपि वाचकविनयविजयमानविजयप्रभृतिप्रौढविबुधाग्रणीमुनिजनेषु न केनाऽपि प्रयेते लिखितुं तद्वृत्तम्,
तदानीं जीवनवृत्तान्तलेखनपद्धतेरल्पतया तदुपेक्षणात् । स्वस्य स्वेनैव जीवनचर्याख्यानमप्यतीवतुच्छताद्योतकमिति
विज्ञाय न क्वापि प्रचर्चितं विशेषतः स्वात्मनाऽपि वाचकवरेण, नचापि ज्ञायते कोऽपि तादृक् भास्वरोऽप्रतिमप्रतिभया-
तदन्तेवास्यपि येन स्वगुरोर्वृत्तं लिखितं भवेत्, इत्येवंविधकारणैरनुपलब्धेऽप्यथेतिपर्यन्ते तद्वृत्ते मोदकस्यैकमपि
खण्डं यथा भुज्यमानं परममाधुर्यदायकं तद्वत् स्तोकांशेनापि लिख्यमानं वाचकेन्द्रवृत्तमाह्लादयिष्यत्येव धीमतां
चेतांसीति सुदृढं मे श्रद्धानम् ।

श्रूयते किंवदन्त्या किल श्रीमद्भिस्तपोगच्छाच्छाम्बरगभस्तिमालिभिर्यशोविजयोपाध्यायैर्वैक्रमीयाष्टादश्यां शताब्द्या-

मद्योति जैनश्रावककुटुम्बं स्वकीयजन्मदेहद्युतिभरेण। मातापितरौ चाहूतवन्तौ श्रीमन्तं यशोराज इति नाम्ना। पाठकमहाशयाः ! इत आरभ्य श्रीमन्तमर्वाक् प्रव्रज्यासमयात् यशोराजेति नाम्ना व्यवहरिष्यामो वयमपि।

प्रतिदिनं विलोक्य बालमृगाङ्कोपमं स्वात्मजमधातामवर्णनीयपरमानन्दधुरां तत्पितरौ। नाज्ञासिष्टां च तथा स्वपुत्रलालनोत्सवव्यग्रचेतस्कौ तौ गच्छन्तमपि समयम्। परं जानीथ यूयं प्रियसुहृज्जनाः ! यन्नाकलयति जगति सदैकरूपतां किमपि वस्तु। प्रभाते प्रचुरपरिमलभराविलानि नवविकसितानि प्रौढतारुण्यभाञ्जि नयनहारीणि यानि सरसकुसुमानि विलोक्यन्ते तान्येव पुनः सायं परमम्लानतां गतानि किं न कलुषयन्ति मनःसरोजं रसिकगणस्य ?। प्रत्येकवस्तूनामपीदृग्विधैव खलु परिवर्तनस्थितिः। तथैव च जनानां सुखदुःखयोरपि चक्रं विद्यते प्रतिक्षणं परावर्ति। नैव कदाचिद्बिभर्ति चिरस्थास्नुताम्। अत्र च कविकुलललामस्य कालिदासकवेरपि हृदयंगमं वाक्यमवतरति मे स्मृतिपथम्—

"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा, नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण।"

एतल्ललितवाक्यं सार्थकीकर्तुमिव च्छलपटुना विधात्रा यशोराजमातुः सुखचक्रे विपर्यासतां नीतेऽकांड एव यशोराजजनको विहायेदं स्वप्नोपमं क्षणनश्वरं जगत्, पतिव्रतोत्तमां च स्वप्रियतमां, लघीयांसं च बालं, सुरललनाभिराकृष्ट इव सुरलोककान्ततल्पमध्यभागमशिश्रियत्। तदनु तत्सहचरी चक्रवाकीव स्ववल्लभगगनमणिविप्रयुक्ता, बालकुरङ्गीव

नयोपदेशनामा नयामृततरङ्गिण्याख्य-
पूरयितुं निखिलविबुधजनतारकतारापतिवाचकश्रीमद्यशोविजयगणिनिर्मितो
व्याख्यासनाथो नवीनग्रन्थोऽयमसद्धर्मारमणीयवासनातिमिरपटलान्धजननयनोद्घाटनेऽञ्जनशलाकोपमः प्रकटय्य निधी-
यते तत्पुरतः। विलोक्येमं विस्मयस्मेरलोचनास्ते समकालमेव'ननु कोऽयमस्य ग्रन्थस्य प्रणेता श्रीमान् यशोविज-
यमहोपाध्यायः? कस्यां शताब्द्यामिदं महीमण्डलमलञ्चक्रे स्वकीयसुकुमारचरणारविंदविन्यासैः? कथंकारमाससादे-
दृशीं लोकोत्तरचमत्कारकारिणीं विद्यां? कथं च लेभे न्यायविशारदेति बिरुदं?' इत्यादिसन्देहदोलान्दोलितहृदया
भविष्यन्तीति तत्संदेहापनोदनमवश्यमेव कर्तुमुचितम्, परं हन्त! संकुचाम्यतितरामत्र विषये सामस्त्येन किमपि
लिखितुं, यतो विहितेऽपि गरीयसि प्रयासे नोपलभ्यते क्वापि तन्महात्मनस्तथाविधलिखितवृत्तान्तोऽधुना, तथा तत्तुल्य-
कालीनेषु सत्स्वपि वाचकविनयविजयमानविजयप्रभृतिप्रौढविबुधाग्रणीमुनिजनेषु न केनाऽपि प्रयेते लिखितुं तद्वृत्तम्,
तदानीं जीवनवृत्तान्तलेखनपद्धतेरल्पतया तदुपेक्षणात्। स्वस्य स्वेनैव जीवनचर्याख्यानमप्यतीवतुच्छताद्योतकमिति
विज्ञाय न क्वापि प्रचर्चितं विशेषतः स्वात्मनाऽपि वाचकवरेण, नचापि ज्ञायते कोऽपि तादृक् भास्वरोऽप्रतिमप्रतिभया-
तदन्तेवास्यपि येन स्वगुरोर्वृत्तं लिखितं भवेत्,—इत्येवंविधकारणैरनुपलब्धेऽप्यथेतिपर्यन्ते तद्वृत्ते मोदकस्यैकमपि
खण्डं यथा भुज्यमानं परममाधुर्यदायकं तद्वत् स्तोकांशेनापि लिख्यमानं वाचकेन्द्रवृत्तमाह्लादयिष्यत्येव धीमतां
चेतांसीति सुदृढं मे श्रद्धानम्।

श्रूयते किंवदन्त्या किल श्रीमद्भिस्तपोगच्छाच्छाम्बरगभस्तिमालिभिर्यशोविजयोपाध्यायैर्वैक्रमीयाष्टादश्यां शताब्द्या-

मद्योति जैनश्रावककुटुम्बं स्वकीयजन्मदेहद्युतिभरेण। मातापितरौ चाहूतवन्तौ श्रीमन्तं यशोराज इति नाम्ना। पाठक-महाशयाः! इत आरभ्य श्रीमन्तमर्वाक् प्रव्रज्यासमयात् यशोराजेति नाम्ना व्यवहरिष्यामो वयमपि।

प्रतिदिनं विलोक्य वालमृगाङ्कोपमं स्वात्मजमधातामवर्णनीयपरमानन्दधुरां तत्पितरौ। नाज्ञासिष्टां च तथा स्वपुत्रलालनोत्सवव्यग्रचेतस्कौ तौ गच्छन्तमपि समयम्। परं जानीथ यूयं प्रियसुहृज्जनाः! यन्नाकलयति जगति सदैवैकरूपतां किमपि वस्तु। प्रभाते प्रचुरपरिमलभराविलानि नवविकसितानि प्रौढतारुण्यभाञ्जि नयनहारीणि यानि सरसकुसुमानि विलोक्यन्ते तान्येव पुनः सायं परमम्लानतां गतानि किं न कलुषयन्ति मनःसरोजं रसिकगणस्य?। प्रत्येकवस्तूनामपीदृग्विधैव खलु परिवर्तनस्थितिः। तथैव च जनानां सुखदुःखयोरपि चक्रं विद्यते प्रतिक्षणं परावर्ति। नैव कदाचिद्बिभर्ति चिरस्थास्नुताम्। अत्र च कविकुलललामस्य कालिदासकवेरपि हृदयंगमं वाक्यमवतरति मे स्मृतिपथम्—

"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा, नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण।"

एतल्ललितवाक्यं सार्थकीकर्तुमिव च्छलपटुना विधात्रा यशोराजमातुः सुखचक्रे विपर्यासतां नीतेऽकांड एव यशोराजजनको विहायेदं स्वप्नोपमं क्षणनश्वरं जगत्, पतिव्रतोत्तमां च स्वप्रियतमां, लघीयांसं च वालं, सुरललनाभिराकृष्ट इव सुरलोककान्ततल्पमध्यभागमध्यशिश्रियत्। तदनु तत्सहचरी चक्रवाकीव स्ववल्लभगगनमणिविप्रयुक्ता, वालकुरङ्गीव

दिनानि यावत् । गुरुरपि तदपूर्ववृत्तान्ताकर्णनेन चित्रीयमाणचेता आहूय तदात्मजमप्राक्षीत्काँश्चन प्रश्नान् । यथार्थोत्तरासादनेन परमां मुदमाबभार ।

तदनु गतायां च यशोराजजनन्यां सपुत्रायां निजभवनं व्यचिंतयत्स्वहृदये यशोराजविषये— अहो शैशवेऽपि कियान् प्रतिभाभरस्तस्य बालस्य, कीदृशी च चतुरचित्तचमत्कारकारिणी स्मरणशक्तिः, कीदृशश्च वचसां मधुरिमोद्गारः, यदि गृह्णीयादयं प्रव्रज्यां तदाऽऽयत्यां प्रोद्द्योतयेज्जैनशासनम्, इति निर्धार्य समस्तसंघमेकत्रीकृत्याजिज्ञपत्स्वाभिप्रायं यशोराजविषयकम् ।

अवबुध्येमं गुरो रमणीयं तर्कं सर्वोऽपि संघोऽगमद्यशोराजमातृभवनम् । प्रार्थयाञ्चक्रेऽनेकाभिः सरससुकोमलपदगर्भितवचनयुक्तिभिस्तां प्रदातुं स्वात्मजं गुरवे । साऽपि 'दुर्निवारा खलु संघाज्ञा' इति विचार्योपजहार संघायातीवप्रियमपि स्वकीयं सूनुम् । संघोऽपि समानीय तं गुरवेऽर्पयामास सादरम् । गुरुरपि निरतिशयानन्दमग्नचेता वितीर्य तं मुक्तिपुरीसाम्राज्यवितरणपटीयसीं प्रव्रज्यां 'यशोविजय' इति नाम्ना विभूषयामास ।

विद्वन्मणयः ! स एवायं यशोविजयो यद्विषयेऽशङ्कि भवद्भिर्ननु कोऽयं श्रीमान् यशोविजय इति ।

पुनरप्यत्र यूयं प्रक्ष्यथ यत् 'अस्ति चेत्स एव यशोविजयस्तर्हि कस्य सूरेः पट्टपरम्परायामभूत्, दर्शयतु प्रमाणम्, तमृते न वयं स्वीकरिष्यामहे तं प्रामाणिकपुरुषकोटौ' इत्यतो दर्शयाम्यत्र वाचकेन्द्रस्ववचनप्रमाणम्, पठ्यतामेकतानचेतसा—

"सोम इव गोविलासैः, कुवलयबोधप्रसिद्धमहिमकलः । श्रीहीरविजयसूरिस्तपगच्छव्योमतिलकमभूत् ॥ १ ॥

श्रीविजयसेनसूरिस्तत्पट्टोदयरविरिवाभूत् । यस्य पुरो द्योतन्ते, शलभा इव भान्ति कुमतिगणाः ॥ २ ॥
तत्पट्टनन्दनवने, कल्पतरुर्विजयदेवसूरिवरः । विबुधैरुपास्यमानो, जयति जगज्जन्तुवाञ्छितदः ॥ ३ ॥
तत्पट्टरोहणगिरौ, सुररत्नं विजयसिंहसूरिगुरुः । भूपालभालतिलकी–भूतक्रमनखरुचिर्जयति ॥ ४ ॥
राज्ये प्राज्ये विजयिनि, तस्य जनानन्दकन्दजलदस्य । ग्रन्थोऽयं निष्पन्नः, सन्नयभाजां प्रमोदाय ॥ ५ ॥
यस्यासन् गुरवोऽत्र जीतविजयप्राज्ञाश्च प्रकृष्टाशयाः, भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः ॥
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीसोदरः, सोऽयं न्यायविशारदः स तनुते भाषारहस्यं मुदा ॥ ६ ॥"

[ इति भाषारहस्यप्रशस्त्याम् ] ॥

इत्थं जगद्गुरुश्रीमद्धीरविजयपट्टश्रेण्यां प्रामाणिकतामाभेजानो वाचकेन्द्रः कथं लेभे न्यायविशारदेति विरुदं कथं च प्रतिपन्नवानीदृशीं कवित्वशक्तिमित्यस्मिन् विषये निर्णीयतेऽधुना ।

कुवादिजनशलभदीप्रप्रदीपायमानो वाचकेन्द्रः प्रव्रज्यानन्तरं कुशाग्रधियाऽधीत्य जैनागमान् स्वगुरुनयविजयसन्निधौ पुनर्न्यायशास्त्रं पिपठिषुरयासीत्काश्यां स्वगुरुणा सह । अत्र च केचन मन्वते यद्वाचकविनयविजयेन सहागमत्, परं वाचकेन्द्रः स्वयं त्वेवमुल्लिखति स्वप्रणीतद्वात्रिंशिकायाः प्रशस्त्याम्—

"प्रकाशार्थं पृथ्व्यास्तरणिरुदयाद्रेरिह यथा, यथा वा पाथोभृत्सकलजगदर्थं जलनिधेः ।
तथा वाणारस्याः सविधमभजन् ये मम कृते, सतीर्थ्यास्ते तेषां नयविजयविज्ञा विजयिनः ॥ १ ॥"

एतद्वचनेनानुमीयते यद्वाचकेन्द्रः स्वगुरुणा सहैव गतो भवेदिति प्रत्याययन् सर्वानैतिहासिकविषयरसिकान् निगदामि यत्सगुरुर्वाचकेन्द्रस्तत्र काश्यां जैनशासनपरिपन्थिनमपि स्वविद्यागुरुं "गुणैः को न रज्यते" एतां नीतिशास्त्रोक्तिमनुसरन् रञ्जयित्वा तं विनयादिदिव्यगुणैरभ्यस्य तदन्तिके न्यायशास्त्रमाद्वादशवर्षं न्यूनाधिकं वा समयं आससादाखिलन्यायशास्त्रपारावारपारदृश्वताम्।

अत्रान्तरे तत्रायासीदेकदा कश्चन दाक्षिणात्यन्यायकोविदो दर्पोद्धुरकन्धरो विजेतुं वाराणसेयविबुधान्, तदानीं लब्धस्वविद्यागुर्वादेशो वाचकेन्द्रो विधाय वादं तेन साकं विविधप्रबलयुक्तिभङ्गभङ्गीभिः पर्यभवत्तम्। अत एव निरीक्ष्यावर्णनीयां विद्वत्तां वाराणसेयसुधियो व्यतार्षुः श्रीमते न्यायविशारदेति बिरुदम्।

इत्थं लब्धबुधजनमण्डलीविजयवैजयन्तिको न्यायविशारदो विजिहीर्षुरप्येकदोपकाशि विलोक्य मनोरञ्जकं जह्नुतनयाप्रदेशमैच्छदाराधयितुं कविजनहृदयहारनिभां भगवतीं सरस्वतीम्।

स्वेच्छानुसारेणाजपदैँकारनादान्वितसरस्वतीमन्त्रमुपगंगमेकविंशतिमहानि यावत्। जापानुभावेन तत्पुरः साक्षाद्भूय सरस्वती प्रददेऽप्रतिमां कवित्वशक्तिं श्रीमते। एतच्च श्रीमता स्वेनैव समसूचि न्यायखण्डखाद्यस्य प्रारम्भे यथा—

"ऐँकारजापवरमाप्य कवित्वविस्त्वं, वाञ्छासुरद्रुमुपगङ्गमभङ्गरङ्गम्।
सूक्तैर्विकाशकुसुमैस्तव वीर शम्भोरम्भोजयोश्चरणयोर्वितनोमि पूजाम्॥ १॥"

ततः सरस्वतीवरोद्धताधिकप्रतिभाभरो वाचकेन्द्रो विहृत्य काश्याः पूर्वदेशावतंसायमानेषु आग्रा–दिल्ली प्रमुखरथ्येषु

वितरन् धर्मोपदेशमगमन्मरुधरित्रीम्। विस्माप्य तत्रत्यजनान् बहूनि दिनानि यावत्स्वकीयाऽप्रतिमवैदुष्यपूर्ण-देशनयाऽलङ्चक्रे क्रमेण सुरलोकमहीखण्डमिव भ्राजमानं गूर्जरजनपदं स्वचरणारविन्दविन्यासैः।

तदानीमासीदधिकं प्राचुर्यं दिगम्बरढुंढककटुकादिमतानाम्। अतस्तत्तन्मतानुयायिभिः साकं विधाय वादमकार्षी-त्तानवाङ्मुखान्। तथा तन्मताटोपपरासनकृते व्यरचयन्ननेकान् ग्रन्थान्। यथा—दिक्पटानपाकर्तुं ज्ञानार्णव—अध्यात्ममतपरीक्षा—दिक्पटचोरासीबोल इत्यादि ग्रन्थानरचयत्।

निर्माय च स्वोपज्ञटीकान्वितप्रतिमाशतक—देवधर्मपरीक्षादिग्रन्थानधरीचक्रे प्रतिमोत्थापकढुण्ढकानां दर्पम्। तथेतरधर्ममिथ्याभिमानमाविभ्रतां बुधाभासानां मदमपनेतुमारचयांचकार शतन्यायग्रन्थानित्यवबुध्यते तर्कभाषाप्रशस्तितः। यथा—

"पूर्वं न्यायविशारदत्वबिरुदं काश्यां प्रदत्तं बुधै—र्न्यायाचार्यपदं ततः कृतशतग्रन्थस्य यस्यार्पितम्।"

महाशयाः! यद्यप्यत्र प्रशस्त्यां किंविषयकाः शतग्रन्था इति नो स्पष्टितं स्पष्टतया, तथाऽपि श्रीमत्समकालीनविद्वद्गदाधरनिर्मितव्युत्पत्तिवाद—शक्तिवादाद्यनेकन्यायग्रन्था इव श्रीमताऽपि नवीनन्यायपद्धत्या न्यायविषया इमे शतग्रन्था निर्मिता भवेयुरित्यनुमीयते। अन्यथा केवलं यदि स्वधर्मवैषयिकतत्त्वप्ररूपका एव सरलपद्धत्यां निर्मिता भवेयुस्तर्हि परविदुषां तैः सह संबन्धाभावान्न कोऽपि तत्र तेषां विस्मयः, न चेत्थं ते दद्युर्न्यायाचार्येति बिरुदं श्रीमते। तथाऽन्येऽपि रहस्यशब्दाङ्किता अष्टोत्तरशतग्रन्था निर्मिताः श्रीमता। वृत्तमेतदवगम्यते तद्वचनैरेव, यथा—

"भाषाविशुद्ध्यर्थं रहस्यपदाङ्कितया चिकीर्षिताष्टोत्तरशतग्रन्थान्तर्गतप्रमारहस्य—स्याद्वादरहस्यादिसजातीयं भाषारहस्यप्रकरणमिदमारभ्यते"—इति भाषारहस्यप्रारम्भे ।

एवमनेके ग्रन्थाः सन्ति सुरभारत्यां गूर्जरवाण्यां च, संख्याऽपि नो निर्णीयते तेषाम् । एवं श्रीमानयं स्वकीयग्रन्थरत्नप्रकाशेन देशनाकौशलेन च विस्माप्य तदानींतनजनान्, समारोप्य चास्मिन् जगद्रङ्गमण्डपे स्वीययशःस्तम्भमाचन्द्रार्कं, विक्रमीय १७४३ वर्षे श्रीमद्गायकवाडनरेशराज्यान्तर्गतदर्भावती( डभोई ) पुर्य्यां विहायेमं मानुषं देहमलब्ध रमणीयं नैर्जरं कायमिति ।

श्रीमद्विषयेऽन्या अपि काश्चन किंवदन्त्यः श्रूयन्ते परमन्यत्र दर्शितत्वांन्नात्राधिकमकारि प्रचर्चणं तद्विषये इति ।

## संक्षेपतो ग्रन्थपरिचयः ॥

सकलदर्शनात्मकत्वेनार्हतदर्शनस्यार्हतानां स्वदर्शनज्ञानेनाऽवश्यं भवितव्यं, तच्च नयज्ञानमन्तरेण न स्यादिति तज्ज्ञापनार्थं ग्रन्थकर्त्रा श्रीमता न्यायाचार्येण प्रकृतग्रन्थे प्रथमसामान्यतो नयलक्षणं प्रदर्श्याकारि सापेक्षवचनसिद्धिः । ततो बौद्धादिदर्शनानां सापेक्षत्वे सुनयत्वं निरपेक्षत्वे च दुर्नयत्वमिति प्रत्यपादि ।

तदनु द्वित्वे जन्यत्वव्यंग्यत्वपक्षौ परस्परं समर्थ्यादर्शि तत्र स्वकीयोऽभिप्रायः । ततो त्रिधा सापेक्षत्वसिद्धिः, नयप्रमाणवाक्ययोर्भेदः, सप्तभङ्गेषु नयानां समवतारः, तथा जगति सर्वाण्यपि वस्तूनि वैचित्र्यभाञ्जीति चित्ररूपदर्शनं, नैयायिकाभिमतखण्डनं चेति सर्वं क्रमशो न्यरूपि । तदनु प्रचर्च्य विशिष्टवैशिष्ट्यबुद्धिविषयं प्रदर्शितं नयद्वैविध्यम् ।

ततो निरूपितानि पार्थक्येन सप्तनयानां लक्षणानि, नयैश्च सहाकारि पङ्कजादिशब्दानां विचारः । ततो दिगम्बरमतापाकरणं, प्रदेशप्रस्थकवसतिज्ञातानां निरूपणम्, आदौ दिक्पटानां निश्चयनयेन देशना मिथ्यात्वकारणमिति प्रतिपादनं, नयेषु निक्षेपविचारः, निक्षेपप्रसंगतः स्थापना कुत्र स्यात्कुत्र च न स्यादित्यादिविचारणा, तथा प्रतिष्ठाविचारः, प्रतिष्ठायां मीमांसकमतखण्डनं, दर्शनेषु नययोजना, सप्रभेदं ब्रह्मवादिदर्शनस्वरूपं तत्खण्डनं चेत्यादिविषयाः सम्यक् प्रतिपादिताः ।

तदनु मिथ्यात्वस्थानकानि षट् सम्यक्त्वस्थानकानि च षडिति निरूपणं, तथा कारणमनपेक्ष्याकस्मात्कार्यं भवतीति मन्वानानामनुपायवादिनां मतनिराकरणं, पाखण्डिनां च त्रिषष्ट्युत्तरपञ्चशतभेदानां स्वरूपदर्शनं, तथा केचन ज्ञानेन मुक्तिं मन्वते केचन च क्रिययेत्यादि निर्वाणकारणेषु विप्रतिपत्तीनां दर्शनमित्यादिविविधविषयैः समापितोऽयं ग्रन्थः श्रीमता। साद्यन्तं विलोकनादस्य स्वयमेवावभोत्स्यन्ते विबुधमणय इति नात्राधिकमावश्यकता प्रचर्चणस्येत्यलं पल्लवितेन ।

साम्प्रतमेतद्ग्रन्थसंशोधनकर्मणि यैः महाभागैर्यान्यादर्शपुस्तकानि प्रेषितानि तेषामभिधानानि सादरं प्रकटयाम्यत्र—

पुस्तकमेकं पूज्यवर्योपाध्यायश्रीमद्वीरविजयमहाराजानाम्, पुस्तकद्वयं प्रशमार्णवास्मद्गुरुवर्य–पं०–श्रीसिद्धिविजयमुनिपुङ्गवानाम्, एकं पूज्यप्रवर्त्तकश्रीमत्कान्तिविजयमुनिवराणाम्, एकं धर्मोद्धारकन्यायाम्भोनिधि–श्रीमद्विजयानन्दसूरीशशिष्यरत्नश्रीमज्जयविजयमुनीनाम्, एकं विद्वद्वरश्रीमद्विजयनेमिसूरीणाम्, पुस्तकद्वयं च राजपुरीय-(अमदावाद) 'उहला' भाण्डागारसत्कम् ।

इमान्यष्टादर्शपुस्तकान्यशुद्धप्रायाणि उपयुज्य, सम्मतितर्कवृत्ति–कल्पलतावृत्ति–न्यायखण्डखाद्याद्यनेकान्यग्रन्थसा-

हाय्येन च संशोधितोऽयं प्रकृतग्रंथः । तत्र पञ्चप्रुफाणि यावत् क्वचित् क्वचित् येऽशुद्धपाठा ज्ञातास्ते संस्कृत्य मूले निवेशिताः, पूर्वतना अशुद्धपाठाश्च टिप्पण्याम् । तदग्रे शुद्धाशुद्धं पाठद्वयमपि मूले एव न्यवेशि, । तत्राशुद्धस्थले शुद्धपाठः 'कांश' ( ) इत्याकारके चिह्ने प्रदर्शितोऽस्तीति स्वयमेव विलोकनीयं विलोककैः ।

प्रस्तुतग्रन्थप्रकाशने शासनप्रभावकपूज्यपादश्रीमद्विजयकमलसूरीश्वरान्तेवासि–जैनरत्नव्याख्यानवाचस्पति–श्रीमल्लब्धिविजयमुनिपुङ्गवोपदिष्ट–'माणसा'निवासि श्रेष्ठिवर्य–दोलतराम वेणीचंद्रस्य सुतरत्नेन श्रेष्ठि–स्वरूपचन्द्रेण श्रीमत्प्रेमविजयउद्यापनार्थं सुसाहाय्यं वितीर्णम् ।

अन्तिमं ज्ञापनं यद् भूरिसमयव्ययेन विद्वद्वर्य–अनुयोगाचर्य–श्रीमद्दानविजयगणिपुङ्गवविनेयैः श्रीमत्प्रेमविजयमुनिवरैः संशोधितमिमं ग्रन्थरत्नं विलोकन्तां साद्यन्तं सुविचारचातुरीपूर्वं सर्वेऽप्यमलहृदया विदांवरिष्ठाः, पिबन्तु च चिरं गीर्वाणसुधामप्यधरीकुर्वाणं मधुरतरं नयामृतरसम्, परिशीलयन्तु प्रतिक्षणं तत्त्वजिज्ञासवो ग्रन्थकर्तुर्भासुरा युक्तीः, लभन्तां ते चारुविचारकरणचतुराः यथार्थतत्त्वावबोधसरणिम्, कुर्वन्तामेतद्ग्रन्थसंशोधयितुः फलेग्रहिं परिश्रमम्, तथा क्षमन्तां क्वापि दृक्पथमायान्तीः स्खलना निसर्गतो गभीरहृदया विलुप्तपक्षपाताः कोविदशेखरा इत्याशासमानो विरमति स्वकीयाधिकवागाडम्बरात्—

विद्वज्जनगुणाकाङ्क्षी सौभाग्यविजयो मुनिः ।
मेसाना कार्तिक शुक्ला अष्टमी.

॥ अर्हम् ॥

न्यायाम्भोनिधि–श्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

काशीविबुधवितीर्णन्यायविशारदपद–अपूर्वग्रन्थशतग्रन्थनप्रभाववितीर्ण

न्यायाचार्य्यपदधारकश्रीमद्यशोविजयवाचकपुङ्गवविरचितः

स्वोपज्ञनयामृततरङ्गिण्याख्यवृत्त्युपेतः

# नयोपदेशः ।

श्री गुरुभ्यो नमः ॥ श्रीवीतरागाय नमः ॥ ऐं नमः ॥ ऐँदवीव विमला कलाऽनिशं, भव्यकैरवविकाशनोद्यता । तन्वती नयविवेकभारती भारती जयति विश्ववेदिनः ॥ १ ॥ इह हि जिनप्रवचने सर्वं वस्त्वनन्तधर्म्मात्मकतया संकीर्णस्वभावमिति तत्परिच्छेदकेन प्रमाणेनापि तथैव भवितव्यमित्यसंकीर्णप्रतिनियतधर्म्मप्रकारकव्यवहारसिद्धये नयानामेव सामर्थ्यात्तद्व्युत्पादनार्थमयमारंभः । तत्रादौ शिष्टाचारपरिपालनाय विघ्नविघाताय च समुचितेष्टदेवगुरुप्रणिधाननमस्कारलक्षणं मंगलमाचरन् शिष्यावधानाय प्रतिजानीते

**ऐन्द्रधाम हृदि स्मृत्वा, नत्वा गुरुपदांबुजं । नयोपदेशः सुधियां, विनोदाय विधीयते ॥ १ ॥**

"एँद्रमिति" इदि परमैश्वर्य्ये इति धात्वनुसारादिन्द्रः आत्मा तस्य संबंधि ऐँद्रं, धाम अखण्डज्ञानानन्दलक्षणं, अत्र इन्द्रधामपदाभ्यामात्मतद्गुणयोस्साध्यवसानया इन्द्रतेजोऽभेदलाभादवश्योपासनीयत्वमायातमोनिराकर्तृत्वप्रतीतिः। नन्विदमात्मनोऽनुध्यानं तच्च न मङ्गलं, देवतानमस्कारादेरेव मङ्गलत्वेन प्रसिद्धेरिति चेन्न, नैश्चयिकस्यास्यात्मानुध्यानस्यात्मनि परमात्मसमापत्तिफलावहतायाः योगशास्त्रप्रसिद्धत्वात्तदनुध्याने परमात्मानुध्यानस्यावश्यकत्वात्, यथावदात्मानुध्याने परमात्मध्यानस्य कारणत्वाच्च, तदुक्तं समानतांत्रिकैः–'जो जाणदि अरहंते दव्वत्तगुणत्तपेज्जवत्तेहिं। सो जाणदि अप्पाणं मोहो खलु जादि तस्स लयं॥ १॥ इति" ननु तथाप्येतदनुध्यानं न मङ्गलं, स्वापकर्षावधिकोत्कर्षप्रतियोगित्वेन नमस्कार्यज्ञानस्यैव नमस्काररूपमङ्गलत्वात्, ध्यानस्य चोत्कर्षापकर्षानवगाहित्वादिति चेन्न, ध्यानस्यान्तरङ्गतपोभेदत्वेन भावमङ्गलत्वात्, स्मरंति हि परमगुरवः "धम्मो मङ्गलमुक्किट्ठंति" ननु तथाप्यत्र निर्जरामात्रोद्देशेन प्रवृत्तिः स्यात्, नतु विघ्नविघातोद्देशेनेति कथमभीष्टफलसिद्धिरिति चेन्न, सामान्योद्देशेन प्रवृत्तावपि विशेषहेत्वन्तर्भावेन विशेषफलसिद्धेरप्रत्यूहत्वात्, इष्यते हि मोक्षार्थं विहितमपि चरित्रं सरागत्वादिहेत्वंतर्भावेन स्वर्गफलकं, तत्रादिफलं सामान्यं निर्जरामात्रं, तद्विशेषश्च स्वर्गप्रापकः क्लिष्टकर्म्मविगम इति दिक्। सुधियां परिणतनयव्युत्पत्तिशालिनां, विनोदः, सम्यग्नयार्थव्युत्पादकत्वपरामर्शजनितः प्रशंसापुलकोद्भेदादिव्यंग्यः प्रमोदः तदर्थम्। न चाङ्गखेदखलपीडाद्यनुबन्धित्वेनास्य

---

१ गुणाया (ये मूलस्थाः पाठाः प्रतिभाता अशुद्धतया तेऽत्रानीताः मूले च शुद्धान् कृत्वा स्थापिताः यदि कदाचिदत्रत्याः शुद्धा भान्ति धीमतां तदा ते एवादरणीयाः) २ वज्जुपत्तेहिं ३ नमस्कार्याज्ञानस्यैव ४ को भेदादि

तुल्यायव्ययत्वादकामत्वं, तद्दोषापेक्षयाऽस्य गुणस्यानन्तगुणोत्कृष्टत्वात्, तदाहुः श्रीहरिभद्राचार्याः प्रथमविंशतिकायां "द्रुक्खो उण इह दोसो जं जायइ खलजनस्स पीडत्ति । तह वि पयट्टो इत्थं दट्ठुं सुयणाण मइतोसं, ॥ १ ॥ ति" इदमुपलक्षणं बालानां व्युत्पत्तये इत्यपि द्रष्टव्यं, बालव्युत्पत्तेरेव सर्वत्र ग्रन्थप्रयोजनत्वात् । बालश्चात्राधीतान्यतर्कः सम्यगनभ्यस्तनयप्रमाणविभागो द्रष्टव्यः, इतरस्यानधिकारित्वात् "नात्यन्ततदज्ञो नातदज्ञः स एवाधिकारवानिति" श्रवणात् ॥ १ ॥ तत्रादौ नयलक्षणं तत्त्वस्वरूपोपपत्तिञ्चाह

**सत्त्वासत्त्वाद्युपेतार्थेष्वपेक्षावचनं नयः । न विवेचयितुं शक्यं विनाऽपेक्षां हि मिश्रितम् ॥ २ ॥**

"सत्त्वासत्त्वेति" सत्त्वासत्त्वादयो ये धर्म्माः आदिना नित्यानित्यत्वभेदाभेदादिरिति परिग्रहः, तैरुपेतास्तदात्मका[2] येऽर्थाः जीवपुद्गलादयस्तेष्वपेक्षावचनं प्रतिनियतधर्म्मप्रकारकापेक्षाख्यशाब्दबोधजनकं वचनं नयवाक्यमित्यर्थः । इदं वचनरूपस्य नयस्य लक्षणं, ज्ञानरूपस्य तु नयस्य अपेक्षात्मकशाब्दबोधत्वमेवेति द्रष्टव्यम् । अपेक्षात्वञ्च क्षयोपशमजं[3]न्यतावच्छेदको जातिविशेषो विषयितांविशेषो[4] वेत्यन्यदेतत् । ननु घटोऽस्तीत्यादिवाक्यश्रवणात् घटविषयकशाब्दज्ञानं मम जातमित्येव लोकाः प्रतियन्ति, नतु तत्रापेक्षात्वमपीत्यपेक्षात्मकनयज्ञानसत्त्वे किं प्रमाणमत आह–हि निश्चितं, मिश्रितं विरुद्धत्वेन प्रतीयमानैर्नानाधर्म्मैः करंबितं वस्त्वपेक्षां विना विवेचयितुं विवक्षितैकधर्म्मप्रकारकनिश्चयविषयीकर्तुं न शक्यं, तद्विरुद्धधर्म्मवत्ताज्ञानस्यानपेक्षात्मकस्यानुपपत्तेः । बाधप्रतिबध्यतावच्छेदकंकोटौ[5] लाघवेनापेक्षात्मकत्वस्यैव निवे-

---

१ पयट्टो २ तैरूपेता ३ जन्यताविच्छेदको ४ विषयताविशेषो वेत्य ५ वच्छेदकोटौ

शात्, अव्याप्यवृत्तित्त्वज्ञानकालीनाहार्य्यदोषविशेषजन्यादीनामपेक्षात्मकत्वेनैव तद्वारकविशेषणानुपादानात्, तथाच तद्धर्म्मप्रतिपक्षधर्म्मवत्तया ज्ञातेऽपि तद्धर्म्मवत्तया जायमानस्यानुभवस्यान्यथानुपपत्तिरेवापेक्षात्वे मानं, तस्या एव सर्वतो बलवत्प्रमाणत्वात्, तदाह श्रीहर्षः—"अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका। पिनष्ट्यदृष्टवैमत्यं, सैव सर्वबलाधिका ॥ १ ॥ इति" नचापेक्षां विना लौकिकोऽपि व्यवहारः संगच्छते, अग्रोद्यवच्छेदेन कपिसंयोगाभाववति वृक्षे शाखापेक्षयैव कपिसंयोगवत्त्वव्यवहारात । नचावच्छेदकावगाह्येवायं नत्वपेक्षात्मक इति वाच्यम्, शाखावच्छिन्नो वृक्षः कपिसंयोगवान्नतु संपूर्णः इति प्रत्ययस्य स्कंधदेशापेक्षां विनाऽनुपपत्तेः। कथञ्चैवं सामान्यविशेषापेक्षां विना घटपटयोः रूपं घटपटयोर्न रूपमित्यादयो विचित्रनयापेक्षाः प्रत्ययाः समर्थनीयाः। संग्रहनयाश्रयणेनैव हि घटपटोभयरूपसामान्योद्भूततत्त्वविवक्षया घटपटयोः रूपमिति प्रत्ययस्योपपत्तेः, द्वयोर्भेदविवक्षायां प्रत्येकान्वयस्य धर्म्मद्वयावच्छिन्नवाचकपदयोः संधानस्थल एव व्युत्पन्नत्वात्, व्यवहाराश्रयणात्तु प्रकृतप्रयोगोऽनुपपन्न एव, मिलितवृत्तित्वान्वये एव तस्य साकांक्षत्वात्, घटपटयोर्न रूपमिति बोधस्यैव तस्मादुत्पत्तेः। यत्तु घटपटयोर्न रूपमिति वाक्यं तात्पर्यभेदेन योग्यायोग्यं, घटपटयोः रूपत्वावच्छिन्नाभावान्वयतात्पर्येऽयोग्यमेव, रूपत्वावच्छेदेन घटपटोभयवृत्तित्वाभावान्वयतात्पर्ये च योग्यमेव। घटपटयोः रूपमित्यादौ च घटपटोभयवृत्तित्वस्यापि रूपत्वादिसामानाधिकरण्येनान्वयबोध एव साकांक्षत्वान्न तयोर्घटरूपमित्यपि स्यादिति कैश्चित्कल्प्यते, तदसत्, प्रतिवस्तुन्याकांक्षावैचित्र्यस्यापेक्षाबोधात्मकफलवैचित्र्यार्थमेवाश्रयणात्, उभ-

१ लोकिको. २ अश्राया. ३ स्कंधे, ४ विचित्रनयापेक्षाम्. ५ वि ६ पदोसदान.

यरूपसामान्यस्य प्रत्येकरूपविशेपात्कथंचिद्भेदानभ्युपगमे त्वदुक्तान्यव्युत्पत्तिग्रहात्, घटपटयोर्घटरूपमिति जायमानस्य बोधस्य प्रामाण्यापत्तेश्च । अस्माकं तु स्यादर्थानुप्रवेशस्यैवातिप्रसङ्गभंजकत्वान्न दोपः । किञ्चैवं द्वयोर्गुरुत्वं न गन्ध इत्यादौ का गतिः, गुरुत्वसामानाधिकरण्येनैव गंधत्वसामानाधिकरण्येनापि पृथिवीजलोभयत्वाश्रयवृत्तित्वसाम्यात् विधिनिषेधविषयार्थानिरुक्तेः । अत्र सप्तम्याः स्वार्थान्वयितावच्छेदकस्वरूपात्समव्याप्यातिरिक्तैवाधेयतार्थः, तत्र च प्रकृत्यर्थस्य तन्निष्ठनिरूपितत्वविशेषेणान्वयात् पृथिवीजलोभयविशिष्टाधेयतात्वेन गुरुत्वं विधेयतया गन्धश्च निषेध्यतया प्रतीयत इत्युक्तौ च नामान्तरेण गुरुत्वसामान्यस्यैव विधेयत्वं गन्धसामान्यस्यैव च निषेध्यत्वमुक्तमायुष्मता, अतिरिक्ताधारतायां अनिरूपणात्, अन्यथा घटपटयोर्न घटरूपमित्यादौ जातिघटयोर्न सत्तेत्यादाविव घटपटोभयनिरूपितत्वाभाववदाधेयतावद् घटरूपमित्यन्वयोपपादनेऽपि घटपटरूपे इत्यस्योपपादयितुमशक्यत्वात्, घटरूपत्वादिस्वरूपाया आधेयतायाः उभयानिरूपितत्वात्। तत्र द्वित्वादिस्वरूपैवाधेयतेतिचेत् द्वयोः प्रत्येकरूपावच्छेदेन द्वित्वाभावान्निषेधस्यापि प्रवृत्तिः स्यात्। अनुयोगितावच्छेदकावच्छेदेनैव सप्तम्यर्थाधेयत्वान्वयव्युत्पत्तेर्नायं दोष इति चेत्तथापि घटरूपाकाशे इत्यादिकं कथं,? एतद् द्वित्वादिस्वरूपाया आधेयताया उभयानिरूपितत्वात्, तत्र तात्पर्यवशात् द्वेधान्वयेऽप्युभयस्यानाधेयत्वाभावात्। तस्मान्नयापेक्षाभेदेनात्र विचित्र एव बोधः स्वीकार्य्यः ॥ २ ॥ नन्वनन्तधर्म्ममिश्रितं वस्तु कथं विवेचयितुमशक्यं? अनान्तानामपि धर्म्माणां धर्म्यभिन्नत्वेन धर्मिग्राहकप्रत्यक्षादेरेव तद्विवेकरूपत्वात्, सति च तद्विवेके किमपेक्षाश्रयणेनेत्याशंक्याह—

१ नैव. २ वधियतार्थः. ३ धर्म्याभिन्नत्वेन.

**यद्यप्यनन्तधर्म्मात्मा, वस्तु प्रत्यक्षगोचरः । तथापि स्पष्टबोधः स्यात्सापेक्षो दीर्घतादिवत् ॥ ३ ॥**



व्याख्या—यद्यपि वस्तु घटपटादिकं, अनन्तधर्म्मात्मकं सत् प्रत्यक्षगोचरः प्रत्यक्षादिप्रमाणविषयः, एकस्मिन् घटादौ गृह्यमाणे गृह्यमाणधर्म्मोपरागेण द्रव्यार्थादेशेनातीतानागतवर्तमानानां तद्वृत्तिधर्म्माणां यावतामेव ग्रहात्, परेषां सामान्यलक्षणप्रत्यासत्तिस्थानेऽभिषिक्तस्य घटविषयकतिर्य्यक्सामान्योपयोगस्य घटत्वव्यापकविषयताकप्रत्यक्षत्वं तादृशज्ञानत्वं वा यथा कार्य्यतावच्छेदकं तथा तद्विषयकोर्ध्वतासामान्योपयोगस्यापि तादात्म्यसंबन्धेनाधेयत्वसंबन्धेन वा घटत्वव्यापकविषयताकप्रत्यक्षत्वस्य तादृशज्ञानत्वस्य वा कार्यतावच्छेदकताया न्यायसिद्धत्वात् । अत एव "जे एगं जाणइ से सव्वं जाणइ" इति पारमर्षवचनानुरोधोऽपि, एकवस्तुग्रहे तद्गतस्वपरपर्यायकुक्षिप्रवेशेन सर्वेषामेव ग्रहात् । अनुवृत्तिव्यावृत्तिसंबन्धपर्य्यालोचने तावत्प्रमाणस्यैव वस्तुनोऽनुभवात् । तदाह महावादी संमतौ—"एगदविअम्मि जे अत्थपज्जवा वयणपज्जवा वा वि । तीयाणागयभूआ तावइयं तं हवइ दव्वं ॥ ३ ॥ इति" नन्वेवं सर्वस्य सार्वज्ञ्यापत्तिरितिचेन्न, द्रव्यार्थिकतयेष्टत्वात्[6] । उक्तभगवद्वचनरुच्यनुवेधेन सम्यक् संपत्त्या चानतिप्रसङ्गात् । यद्यप्येवं तथापि स्पष्टबोधः सत्त्वासत्त्वादिप्रतिनियतधर्म्मप्रकारको बोधः सदसदाद्याकारको वा बोधः सापेक्षः, शाब्दस्थले नयापेक्षया जनितः, प्रत्यक्षस्थले चावध्यवच्छेदकादिज्ञानापेक्षः स्यात् । किंवद् दीर्घतादिवत् आदीयतेऽनेनेत्यादि ज्ञानं, दीर्घताप्रत्यक्षवदित्यर्थः । यथा हि दंडादिज्ञानकाले तत्परिमाणग्रहेऽप्ययमस्माद्दीर्घ इति दीर्घत्वप्रकारकं ज्ञानं नियतावध्यपेक्षयैव तथा सदसदात्मकवस्तुग्र-



१ घटत्वा व्यापकविषय. २ सामान्यस्योत्तादात्म्यसंबन्धिना. ३ कार्षता. ४ पारमर्षव. ५ पवादविषयंमि. ६ द्रव्यार्थतेष्टत्वात्.

अयमेतदपेक्षया दीर्घ इतिविदयं स्वद्रव्याद्यपेक्षया सन् परद्रव्याद्यपे-
क्षेऽपि सत्त्वादिप्रकारकं ज्ञानं स्वद्रव्याद्यपेक्षयैवेत्यर्थः । अयमेतदपेक्षया दीर्घ इतिविदयं स्वद्रव्याद्यपेक्षया सन् परद्रव्याद्यपे-
क्षया चासन्नित्येव व्यवहारात् । नन्वेवं व्यवहार एव सापेक्षो नतु वोध इतिचेन्न, व्यवहर्तव्यज्ञाने सति सत्यां चेच्छायां
व्यवहारे आधिक्यतानपेक्षणात्, अन्यथाऽभावज्ञानेऽपि प्रतियोग्यपेक्षा न स्यात्, तद्व्यवहार एव संप्रतियोगिकत्वस्थितेः ।
अथ दीर्घो दंड इति ज्ञानं चक्षुःसन्निकर्षमात्राज्जायत एव,अमुकापेक्षया दीर्घ इति दीर्घत्वत्वावान्तरजात्यवगाहिज्ञान एव चा-
वधिज्ञानापेक्षेति चेन्न, ह्रस्वत्वेन ज्ञाते दीर्घत्वेन ज्ञानस्यैवापेक्षां विनानुपपत्तिः, तद्वदिहापि परद्रव्यादिनाऽसत्त्वेन ज्ञाने
स्वद्रव्याद्यपेक्षयैव सत्त्वज्ञानमिति प्रतिपत्तव्यम् । अवच्छेदकानवगाहिनस्तु अनवधारणरूपत्वादेवानुपयोगः । द्विहस्तादि-
मात्रेऽनावृतैकहस्तावच्छेदेन महत्त्वग्रहस्तु देशापेक्षयैवेति[6] न तस्य निरपेक्षत्वं, अत एवावरणापगमे स्कंधापेक्षया परिमाणे
द्विहस्तत्वग्रहेऽपि तावदवच्छेदेन हस्तत्वग्रहस्य नाप्रामाण्यं देशस्कंधभेदेनोभयोपपत्तेः । एतेन भूयोऽवयवावच्छेदेन चक्षुः-
संयोगाभावान्नार्द्धनिखातवंशादेर्द्विहस्तादिपरिमाणग्रह इति प्राच्यनैयायिकानां प्रलापो निरस्तः, यावति भागे नावरणं
तावति भागे परिमाणस्य ग्रहादेव स्कन्धपर्य्याप्तपरिमाणग्रहे तत्पर्याप्तावच्छेदकयावदवयवावच्छेदेनावरणाभावलक्षणयो-
ग्यताया एव हेतुत्वे दोषाभावात् । किञ्च भूयोऽवयवावच्छेदेनेत्यस्य कोऽर्थः, यावदवयवसन्निकर्षस्य कुत्राप्यसम्भवात्,
अनेकतत्संयोगस्य चातिप्रसंजकत्वात्, भूयोऽवयवावच्छिन्नत्वोपलक्षिताधारताविशेषस्य च देशस्कंधापेक्षावैचित्र्यमुखनिरी-

१ अयगेवतद. २ इतिवयं. ३ ऽधिक्यनापेक्षणात्. ४ सम्प्रति योगिकत्वस्थितेः. ५ देवात्वानुपयोग. ६ ति तस्य निरपेक्षत्वम्.

क्षकत्वादिति न किञ्चिदेतत् । यत्तु विषयता[1]संबन्धेन परिमाणसाक्षात्कार[2]त्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसंबन्धेन तत्तदावारकसंयोगत्वेन प्रतिबन्धकत्वान्नार्द्धनिखातवंशादिपरिमाणग्रहः, यद्वाऽर्द्धनिखातवंशादेर्महत्त्वादिकं गृह्यत एव, महानयं वंश इति प्रतीतेः, तदवान्तरवैजात्यन्तु नानुभूयत इति तत्तद्वैजात्यग्रहं प्रत्यावारकसंयोगस्य विरोधिता । नच निखातानिखातसदृशवंशयोः सन्निकर्षदशायां तन्महत्त्वादिवृत्तिवैलक्षण्यानुभवाद्वैजात्यप्रत्यक्षं प्रत्यावारकसंयोगानां प्रतिबंधकत्वासंभव इति वाच्यम्, तादृशवैलक्षण्यप्रकारकप्रत्यक्षं प्रत्येव तेषां विरोधित्वात् । विशेष्यत्वं प्रतिबध्यतावच्छेदकः संबन्धः, स्वाश्रयमेव तत्त्वञ्च प्रतिबन्ध[3]कतावच्छेदकमित्यनतिप्रसङ्गात् । नचैवं निखातसन्निकर्षात्तादृशवैलक्षण्यनिर्विकल्पकापत्तिः, इष्टत्वादिति मथुरानाथाभिहितं तत्तुच्छं । एवमपि निखातसन्निकर्षान्महत्त्वप्रकार[4]कतादृशवैलक्षण्यविशेष्यकसाक्षात्कारापत्तेर्दुर्वारत्वात् । किञ्चैवमावृतैकपार्श्वावच्छेदेन यस्य चक्षुःसंयोगान्नोक्तवैजात्यस्य ग्रहस्तस्यैवान्यदा पुरुषान्तरस्य वा तदानी पार्श्वांतरावच्छेदेन चक्षुःसंयोगेऽप्यग्रहः स्यात्? आवारकसंयोगस्य विरोधिनः सत्त्वात् । तत्तत्कालीनतत्तत्पुरुषीयमहत्त्वादिप्रत्यक्षं प्रत्येवोक्तप्रतिबन्धकत्वे त्वनावरणकालीनस्य विलक्षणमहत्त्वादिप्रत्यक्षस्यावरणदशायामुत्पत्तिप्रसङ्गः, नहि तत्रापि सन्निकर्षं विना अन्यद्विशिष्य कारणं क्लृप्तं येन तद्विलंबात्तद्विलंबः स्यात् । अपिचैवमावृतादृष्टनष्टस्थले प्रतिबध्याप्रसिद्धिः, स्वप्राचीस्थपुरुषीयोक्तवैजात्यसाक्षात्कारत्वावच्छिन्न एव स्वप्रतीच्यवच्छिन्नावारकसंयोगत्वेन प्रतिबन्धकत्वे तु द्रव्यचाक्षुषेऽप्येवं भित्त्यादिसंयोगप्रतिबन्धकत्वेन निर्वाहे व्यवहितार्थादर्शनान्यथानुपपत्त्या चक्षुःप्राप्यकारित्वसाधनप्रया

१ त्वा. २ कारित्वा. ३ प्रतिबन्धता. ४ प्रकारता.

सस्य वैफल्यापत्तिरिति न किञ्चिदेतत् । एतेन तादृशवैलक्षण्यसाक्षात्कारप्रयोजकतया चक्षुरादिसंयोगे तिष्ठति वैजात्यान्तरस्वीकारेणैव निर्वाह इति कल्पनापि तेषामपास्ता, तद्धेतोरिति न्यायेनाभिमुख्यविशेषेणावरणाभावविशेषेण वा निर्वाहे तादृशवैजात्यकल्पनायां महागौरवात् । अन्यापेक्षयेव स्वदेशापेक्षयापि न्यूनाधिकतारूपवैजात्यानुभवस्यापेक्षां विनानुपपत्तेश्चेति दिक् ॥ ३ ॥

ननु सर्वत्र वास्तव्येवापेक्षा नयप्रवृत्तिहेतुरुत वैज्ञानिक्यपि ? उच्यते कचिद्वैज्ञानिक्यपि यत्र मतभेदोऽध्यवसायः, तथा चाह—

**नाना नयमयो व्यक्तो, मतभेदो ह्यपेक्षया । कोट्यन्तरनिषेधस्तु, प्रस्तुतोत्कटकोटिकृत् ॥ ४ ॥**

"नानेति" हि निश्चितं मतभेदः बौद्धौपनिषदादिदर्शनभेदः नानानयमयः स्वेच्छानिवेशितत्वेनानेकनयविकाररूपः, वस्तुतः प्रकृतिरूपो वाऽपेक्षया व्यक्तः, शुद्धपर्यायविशुद्धद्रव्याद्यपेक्षयैव तत्तदर्थव्यवस्थितेः । नयविशेषतात्पर्यमेतन्नत्वपेक्षेति चेन्न, तात्पर्य्यस्यापि वस्तुसंबन्धरूपापेक्षामालंव्य प्रवृत्तेः, असति संबन्धे तात्पर्य्यस्य प्रामाण्याप्रसरात् । सा चेयमपेक्षा वैजातिकः संबन्धः, अत एव विकल्पसिद्धस्य धर्म्मिणः प्रतिषेधादिसाधनमामनन्ति सांप्रदायिकाः । ईश्वरो नास्ति प्रकृतिर्नास्तीत्यादौ विशिष्टज्ञानाकारविषयत्वेन तत्र धर्म्मिणो विकल्पसिद्धत्वात्, विशिष्टवस्त्वसिद्धौ कथं विशिष्टाकारोऽपीति किं बाधकम् ?, खण्डशः प्रसिद्धधर्म्मधर्मिरूपसदुपरागेणासदाकारोत्पत्तेर्नासतः ख्यातिप्रसङ्गः । यद्वा आलयविज्ञाभवेदितिचेत् ? यथा तव विशिष्टानतिरेकेऽपि विशिष्टाभावोऽतिरिक्तः प्रतीतिवलात् सिद्धस्तथा मम विशिष्टाकारो-

---

१ संयोगतिष्ठति चिन्त्यम्. २ तद्धजो. ३ तत्तदथ. ४ प्रकृतिना. ५ करौ. ६ वलात. ७ सतख्याति.

पक्षान्तरनिषेधेऽपि नयत्वं

वतोरैक्यमित्यादिना द्विवचनप्रयोगस्य, बहुषु च करितुरगरथपदातिषु सेनेत्येकवचनप्रयोगस्यानुपपत्तेः । अथैकत्वद्वित्वादितत्तद्धर्म्मप्रकारकबुद्धिविषयत्वादिकं गौणमेव द्वित्वादिव्यवहारनिमित्तं तच्च तत्तद्धर्म्मावच्छेदेन पर्याप्तमिति नैको द्वावित्यादेः प्रसङ्गः, मुख्यन्तु द्वित्वमपेक्षाबुद्धिजन्यं द्विष्ठमन्यदेवेति न दोष इति चेन्न, उक्तविषयतारूपद्वित्वादेरप्येकत्वपर्याप्तत्वात्, तत्तद्धर्म्मप्रकारतानिरूपितत्वविशिष्टविषयतायाः अपि क्वचित् संबन्धादिभेदेन प्रकारताभेदादेकस्या अभावात्, भावेऽपि च द्वयस्य प्रत्येकानतिरिक्तत्वेन एकधर्म्मावच्छेदेन द्वित्वादिपर्याप्तिप्रसङ्गात्, धर्म्मगतद्वित्वस्यैव तत्पर्याप्त्यवच्छेदकतावच्छेदकत्वस्वीकारे च तत्रापि द्वित्वस्य वास्तवस्याभावाद्रूपत्वरसत्वादिप्रकारकबुद्धिविषयत्वरूपस्यैव गौणस्य स्वीकारे च तत्पर्याप्त्यवच्छेदकादिगवेषणे अनवस्थितेः, वास्तवद्वित्वाद्यभावे ज्ञानाकारतापर्यवसानेन साकारवादप्रसंगाच्च[3] । तस्माद्द्रव्यत्वावच्छिन्नैकत्वादेः पर्याप्तिस्वीकारेऽनेकांतवाद एवानाविला व्यवस्थेति ध्येयम् । अत एव "दव्वट्ठयाए एगे अहं नाणदंसणट्ठयाए दुवे अहं" इत्यादि पारमर्षं । इदमप्यत्र विचार्य्यते—द्वित्वादिकमपेक्षाबुद्धिजन्यं व्यंग्यं वेति, तत्र जन्यमेवेति नैयायिकाः व्यंग्यमिति प्राभाकराः । तत्र नैयायिकानामयमाशयः—द्वित्वस्य व्यंग्यत्वनयेऽपेक्षाबुद्धेर्द्वित्वत्वप्रकारकलौकिकप्रत्यक्षत्वं कार्य्यतावच्छेदकं वाच्यं, जन्यत्वनये तु द्वित्वत्वमेवेति लाघवं । नच व्यंग्यत्वनयेऽपि लौकिकप्रकारतासंवन्धेन द्वित्वत्वमेव तत्कार्यतावच्छेदकं वक्तुं शक्यं, गुणत्वसंख्यात्वतद्व्यक्तित्वादिना विनाप्यपेक्षाबुद्धिं तत्प्रत्यक्षप्रसंगात्, तेन रूपेण तत्प्रत्यक्षं प्रति तस्या हेतुत्वकल्पने चातिगौरवात् । नच स्वाश्रयविषयतया द्वित्वत्वस्य कार्यतावच्छेदक-

॥ ६ ॥

१ मेनेषु. २ स्थिते. ३ प्रसंगात्. ४ द्वित्वमेवेति. ५ बुद्धि.

तया न दोष इति वाच्यं, तथापि व्यंग्यत्वनये स्वाश्रयविषयत्वं कार्य्यतावच्छेदकतावच्छेदकः संवन्धः, जन्यत्वनये तु सम-
धाय इति जन्यत्वपक्ष एव लाघववान् । अथ द्वित्वप्रत्यक्षेऽपि प्रत्यक्षत्वमेव कार्य्यतावच्छेदकं द्वित्ववृत्तिविषयतायाः
कार्य्यतावच्छेदकसंवन्धत्वेनैवानतिप्रसंगात्, अन्यथा द्वित्वप्रत्यक्षस्य विषयतया द्वित्वत्वादावपि जायमानत्वेन व्यभिचारात्।
अपेक्षावुद्धित्वं कारणतावच्छेदकं तच्च मानसत्वव्याप्यो जातिविशेषः, कारणतावच्छेदकसंवन्धः स्वविषयपर्य्याप्तत्वं, तेन
घटपटैकत्ववुद्धित्वेनापेक्षावुद्धेर्घटपटद्वित्वप्रत्यक्षहेतुत्वेऽनन्तकार्य्यकारणभावापत्तिः, द्वित्वप्रत्यक्षत्वावच्छिन्नेऽपेक्षावुद्धित्वेन
सामान्यतो हेतुत्वेऽपि घटपटद्वित्वप्रत्यक्षकाले घटकुड्यद्वित्वप्रत्यक्षापत्तिः, स्वविषयवृत्तित्वसंवन्धेनापेक्षावुद्धेस्तत्रापि सत्त्वा-
दित्यादिदूषणानवकाशः, घटपटैकत्ववुद्धेर्घटकुड्यद्वित्वे स्वविषयपर्य्याप्तत्वसंवन्धेनासत्त्वादितिव्यंग्यत्वनयेऽपि न गौर-
वमिति चेन्न, एवं सति प्रत्यक्षत्वं कार्य्यतावच्छेदकं, ज्ञानत्वं वा, अनुभवत्वं वेत्यादौ विनिगमकाभावात् । किंच
व्यंग्यत्ववादिना मैत्रीयापेक्षावुद्ध्या सन्निकर्षादिवशाद्द्वित्वे चैत्रीयप्रत्यक्षोत्पत्तिवारणाय चैत्रीयापेक्षावुद्धित्वचैत्रीयप्रत्यक्ष-
त्वादिना कार्य्यकारणभावो वाच्य इति गौरवमेव । अथ तव पुरुषांतरापेक्षावुद्धिजनितद्वित्वस्य पुरुषांतराप्रत्यक्षत्वाय
द्वित्वनिष्ठविषयतासंवन्धेन चैत्रीयप्रत्यक्षे मैत्रीयद्वित्वादिभेदस्यापि हेतुत्वं कल्पनीयम्, यद्वा चैत्रीयद्वित्वप्रत्यक्षं प्रति चैत्रा-
पेक्षावुद्धिजन्यद्वित्वत्वेन हेतुता कल्पनीया, कार्य्यतावच्छेदकः संवन्धः द्वित्वनिष्ठविषयता, कारणतावच्छेदकश्च तादात्म्यं,
अत एव चैत्रमैत्रापेक्षावुद्धिभ्यां तुल्यविषयाभ्यां युगपदुत्पन्नाभ्यामुत्पादितं द्वित्वमेकमेवेति मतेऽपि न क्षतिरिति कल्पना-

१ प्रत्यक्षस्य. २ चेत्यादौ. ३ वादिनां. ४ पेक्षो. ५ पेक्षो.

पक्षान्तरनिषेधेऽपि नयत्वं

स्यवच्छेदकतावच्छेदकत्वस्वीकारे च तत्रापि द्वित्वस्य वास्तवस्याभावाद्रूपत्वरसत्वादिप्रकारकबुद्धिविषयत्वरूपस्यैव गौणस्य स्वीकारे च तत्पर्याप्त्यवच्छेदकादिगवेषणे अनवस्थितेः, वास्तवद्वित्वाद्यभावे ज्ञानाकारतापर्यवसानेन साकारवादप्रसंगाच्च। तस्माद्द्रव्यत्वावच्छिन्नैकत्वादेः पर्याप्तिस्वीकारेऽनेकांतवाद एवानाविला व्यवस्थेति ध्येयम्। अत एव "दवठ्याए एगे अहं नाणदंसणठ्याए दुवे अहं" इत्यादि पारमर्षं। इदमप्यत्र विचार्य्यते–द्वित्वादिकमपेक्षाबुद्धिजन्यं व्यंग्यं वेति, तत्र जन्यमेवेति नैयायिकाः व्यंग्यमिति प्राभाकराः। तत्र नैयायिकानामयमाशयः–द्वित्वस्य व्यंग्यत्वनयेऽपेक्षाबुद्धेर्द्वित्वत्वप्रकारकलौकिकप्रत्यक्षत्वं कार्य्यतावच्छेदकं वाच्यं, जन्यत्वनये तु द्वित्वत्वमेवेति लाघवं। नच व्यंग्यत्वनयेऽपि लौकिकप्रकारतासंबन्धेन द्वित्वत्वमेव तत्कार्यतावच्छेदकं वक्तुं शक्यं, गुणत्वसंख्यात्वतद्व्यक्तित्वादिना विनाप्यपेक्षाबुद्धिं तत्प्रत्यक्षप्रसंगात्, तेन रूपेण तत्प्रत्यक्षं प्रति तस्या हेतुत्वकल्पने चातिगौरवात्। नच स्वाश्रयविषयतया द्वित्वत्वस्य कार्यतावच्छेदक-

॥ ६ ॥

१ मेनेषु. २ स्थिते. ३ प्रसंगात्. ४ द्वित्वमेवेति. ५ बुद्धि.

तया न दोष इति वाच्यं, तथापि व्यंग्यत्वनये स्वाश्रयविषयत्वं कार्य्यतावच्छेदकतावच्छेदकः संबन्धः, जन्यत्वनये तु समवाय इति जन्यत्वपक्ष एव लाघववान् । अथ द्वित्वप्रत्यक्षेऽपि प्रत्यक्षत्वमेव कार्य्यतावच्छेदकं द्वित्ववृत्तिविषयतायाः कार्य्यतावच्छेदकसंबन्धत्वेनैवानतिप्रसंगात्, अन्यथा द्वित्वप्रत्यक्षस्य विषयतया द्वित्वत्वादावपि जायमानत्वेन व्यभिचारात् । अपेक्षाबुद्धित्वं कारणतावच्छेदकं तच्च मानसत्वव्याप्यो जातिविशेषः, कारणतावच्छेदकसंबन्धः स्वविषयपर्य्याप्तत्वं, तेन घटपटैकत्वबुद्धित्वेनापेक्षाबुद्धेर्घटपटद्वित्वप्रत्यक्षहेतुत्वेऽनन्तकार्य्यकारणभावापत्तिः, द्वित्वप्रत्यक्षत्वावच्छिन्नेऽपेक्षाबुद्धित्वेन सामान्यतो हेतुत्वेऽपि घटपटद्वित्वप्रत्यक्षकाले घटकुड्यद्वित्वप्रत्यक्षापत्तिः, स्वविषयवृत्तित्वसंबन्धेनापेक्षाबुद्धेस्तत्रापि सत्त्वादित्यादिदूषणानवकाशः, घटपटैकत्वबुद्धेर्घटकुड्यद्वित्वे स्वविषयपर्याप्तत्वसंबन्धेनासत्त्वादितिव्यंग्यत्वनयेऽपि न गौरवमिति चेन्न, एवं सति प्रत्यक्षत्वं कार्य्यतावच्छेदकं, ज्ञानत्वं वा, अनुभवत्वं वेत्यादौ विनिगमकाभावात् । किंच व्यंग्यत्ववादिना मैत्रीयापेक्षाबुद्ध्या सन्निकर्षादिवशाद्द्वित्वे चैत्रीयप्रत्यक्षोत्पत्तिवारणाय चैत्रीयापेक्षाबुद्धित्वचैत्रीयप्रत्यक्षत्वादिना कार्य्यकारणभावो वाच्य इति गौरवमेव । अथ तव पुरुषांतरापेक्षाबुद्धिजनितद्वित्वस्य पुरुषांतराप्रत्यक्षत्वाय द्वित्वनिष्ठविषयतासंबन्धेन चैत्रीयप्रत्यक्षे मैत्रीयद्वित्वादिभेदस्यापि हेतुत्वं कल्पनीयम्, यद्वा चैत्रीयद्वित्वप्रत्यक्षं प्रति चैत्रापेक्षाबुद्धिजन्यद्वित्वत्वेन हेतुता कल्पनीया, कार्यतावच्छेदकः संबन्धः द्वित्वनिष्ठविषयता, कारणतावच्छेदकश्च तादात्म्यं, अत एव चैत्रमैत्रापेक्षाबुद्धिभ्यां तुल्यविषयाभ्यां युगपदुत्पन्नाभ्यामुत्पादितं द्वित्वमेकमेवेति मतेऽपि न क्षतिरिति कल्पना-

१ - ४ पेक्षो. ५ पेक्षो.

पक्षान्तरनिषेधेऽपि नयत्वं

वतोरैक्यमित्यादिना द्विवचनप्रयोगस्य, बहुषु च करितुरगरथपदातिषु सेनेत्येकवचनप्रयोगस्यानुपपत्तेः । अथैकत्वद्वित्वादितत्तद्धर्म्मप्रकारकबुद्धिविषयत्वादिकं गौणमेव द्वित्वादिव्यवहारनिमित्तं तच्च तत्तद्धर्म्मावच्छेदेन पर्याप्तमिति नैको द्वावित्यादेः प्रसङ्गः, मुख्यन्तु द्वित्वमपेक्षाबुद्धिजन्यं द्विष्ठमन्यदेवेति न दोष इति चेन्न, उक्तविषयतारूपद्वित्वादेरप्येकत्वपर्याप्तत्वात्, तत्तद्धर्म्मप्रकारतानिरूपितत्वविशिष्टविषयताया अपि क्वचित् संबन्धादिभेदेन प्रकारताभेदादेकस्या अभावात्, भावेऽपि च द्वयस्य प्रत्येकानतिरिक्तत्वेन एकधर्म्मावच्छेदेन द्वित्वादिपर्याप्तिप्रसङ्गात्, धर्म्मगतद्वित्वस्यैव तत्पर्याप्त्यवच्छेदकतावच्छेदकत्वस्वीकारे च तत्रापि द्वित्वस्य वास्तवस्याभावाद्रूपत्वरसत्वादिप्रकारकबुद्धिविषयत्वरूपस्यैव गौणस्य स्वीकारे च तत्पर्याप्त्यवच्छेदकादिगवेषणे अनवस्थितेः, वास्तवद्वित्वाद्यभावे ज्ञानाकारतापर्यवसानेन साकारवादप्रसंगाच्च । तस्माद्द्रव्यत्वावच्छिन्नैकत्वादेः पर्याप्तिस्वीकारेऽनेकांतवाद एवानाविला व्यवस्थेति ध्येयम् । अत एव "दव्वट्ठयाए एगे अहं नाणदंसणट्ठयाए दुवे अहं" इत्यादि पारमर्षं । इदमप्यत्र विचार्य्यते—द्वित्वादिकमपेक्षाबुद्धिजन्यं व्यंग्यं वेति, तत्र जन्यमेवेति नैयायिकाः व्यंग्यमिति प्राभाकराः । तत्र नैयायिकानामयमाशयः—द्वित्वस्य व्यंग्यत्वनयेऽपेक्षाबुद्धेर्द्वित्वत्वप्रकारकलौकिकप्रत्यक्षत्वं कार्य्यतावच्छेदकं वाच्यं, जन्यत्वनये तु द्वित्वत्वमेवेति लाघवं । नच व्यंग्यत्वनयेऽपि लौकिकप्रकारतासंबन्धेन द्वित्वत्वमेव तत्कार्यतावच्छेदकं वक्तुं शक्यं, गुणत्वसंख्यात्वतद्व्यक्तित्वादिना विनाप्यपेक्षाबुद्धिं तत्प्रत्यक्षप्रसंगात्, तेन रूपेण तत्प्रत्यक्षं प्रति तस्या हेतुत्वकल्पने चातिगौरवात् । नच स्वाश्रयविषयतया द्वित्वत्वस्य कार्यतावच्छेदक-

॥ ६ ॥

१ मेनेषु. २ स्थिते. ३ प्रसंगात्. ४ द्वित्वमेवेति. ५ बुद्धि.

न च चैत्रीयद्वि- नाशत्वेन हेतुता वाच्या, तथा च द्व्यणुकपरिमाणहेतुपरमाणुद्वित्वस्येश्वरापेक्षाबुद्धिजन्यस्य नाशानुपपत्तिः। न च चैत्रीयद्वि-नाशत्वेन हेतुता वाच्या, तथा च ‍+परमाणुद्वित्वे तु यादृशोपाधिविशिष्टाया ईश्वरापेक्षाबुद्धेर्हे-त्वनाशे चैत्रापेक्षाबुद्धिनाशो हेतुरित्येवं विशिष्यैव कल्प्यते, स्वान्यवहि-तुत्वं तादृशोपाधिनाशादेव तन्नाशः, अविशिष्टायास्तस्या हेतुत्वे सर्वदा द्वित्वोत्पत्तिप्रसंगादिति वाच्यम्, तत्पूर्वक्षणावच्छिन्नत्वेनैव तस्याः अपेक्षाबुद्धित्वमिति तन्नाशात्परमाणुद्वित्वनाशे तस्य क्षणिकत्वप्रसंगात्, अतिरिक्तानुगतो पाधेश्चानिर्वचनात्। अपि चैवं तत्तद्वित्वनाशे तत्तदपेक्षाबुद्धिनाशत्वेन हेतुत्वे महागौरवं। न च फलमुखत्वादस्यादो-पत्वं, अस्यां कल्पनायामेतावद्गुरुतरं कल्पनीयमिति प्रागेवोपस्थितौ तद्दोषताया बाहुलेयत्वात्, तददोषत्वे प्रागनुपस्थि-तेरेव बीजत्वात्। अपिच मानसत्वादिव्याप्यजातिविशेषेणापेक्षाबुद्धेर्द्वित्वादिहेतुत्वे ईश्वरापेक्षाबुद्ध्या परमाणुद्वित्वाद्य-जननापत्तिरीश्वरज्ञानसाधारणद्वित्वादिजनकतावच्छेदकजातिस्वीकारे च जन्यसाक्षात्कारत्वादिना सांकर्यं, त्रित्वा-द्युत्पत्तिकाले द्वित्वाद्युत्पत्त्यापत्तिश्च दुर्निवारा। एतेन द्वित्वादिजनकतावच्छेदकतयाऽपेक्षाबुद्धिनिष्ठलौकिकविषयत्वस्वी-कारोऽपि निरस्तः, परार्द्धादिसंख्यानुत्पत्तिप्रसक्तेश्च तदाश्रययावद्द्रव्यवृत्तिलौकिकविषयताया असम्भवात्। ईश्वरीया-पेक्षाबुद्धेरेव तदुत्पत्त्यङ्गीकारे चान्यत्रापि कारणांतरोच्छेद इति न किंचिदेतदित्याहुः। केचित्तु द्वित्वत्रित्वादिकं तुल्यव्य-क्तिवृत्तिकमेव सामान्यं, अनित्यस्य संयोगादेरिव नित्यस्यापि द्वित्वादेर्व्यासज्यवृत्तित्वे विरोधाभावात्। भिन्नेन्द्रियग्रा-

---

१ ध्येध. २ चित्राये. ३ कल्पते. + परमाणुत्रीयद्वित्वनाशे चैत्रापेक्षाबुद्धिनाशो हेतुरित्येवं कल्पते. ४ तस्यापे. ५ द्वित्यादिज.
६ कारि. ७ द्वित्वाद्यापत्ति.

शकतयैव तत्सिद्धेरन्यथाऽनुभवध्वंसेनैव संस्कारान्यथा-
जातीयविभुविशेषगुणत्वेन हेतुत्वात्, सुषुप्तिप्राक्कालवर्त्ति संस्कारजनकतावच्छेदककोटिप्रवेशात्। नचैव-
सिद्धेरिति चेन्न, अपेक्षाबुद्धेः संस्काराजनकत्वादपेक्षाबुद्धिभिन्नत्वस्यापि संस्कारजनकतावच्छेदककोटिप्रवेशात्। नचैव-
सिद्धेरिति चेन्न, अपेक्षाबुद्धेः संस्काराजनकत्वादपेक्षाबुद्धिः संस्कारं माकार्षीद्विशिष्टबुद्धिं तु कुर्या-
मप्यपेक्षाबुद्धिजनितैकत्वादिविशिष्टबुद्ध्याऽपेक्षाबुद्धिनाशप्रसङ्गः तदुक्तं अपेक्षाबुद्धिः संस्कारं माकार्षीद्विशिष्टबुद्धिं तु कुर्या-
देवेति वाच्यं, विशिष्टबुद्धिजननेऽपि द्वित्वसामग्र्यादेरेव फलबलेन प्रतिबन्धकत्वकल्पनात्। वस्तुतोऽपेक्षाबुद्धिनाशे द्वित्व-
लौकिकप्रत्यक्षस्य विशिष्यकारणत्वकल्पनान्न दोषः। नच तथापि पूर्वापेक्षाजनितद्वित्वनिर्विकल्पकेन स्वद्वितीयक्ष-
णोत्पन्नेनापेक्षाबुद्धेस्तृतीयक्षणे नाशप्रसंगः, प्रतियोगितयाऽपेक्षाबुद्धिनाशे स्वविषयजनकत्वसंबन्धेन द्वित्वलौकिकप्रत्यक्षत्वेन
हेतुत्वात्। नन्वेवमपि द्वे द्रव्ये इति लौकिकप्रत्यक्षं कथं तदुत्पत्तिक्षणे द्वित्वनाशादितिचेन्मैवं, द्वित्वस्य हि प्रत्यक्षे विषय-
विधया हेतुत्वं नतु कार्य्यसहवर्त्तितयेति दोषाभावात्, नहि सर्वेषां कारणानां कार्य्यसहवर्त्तितयैव हेतुत्वं प्रागभावपक्षता-
देरहेतुत्वप्रसङ्गादिति॥ प्राभाकरवृद्धानुसारिणस्तु सोऽयं नैयायिकाशयो न युक्तः, अनन्तद्वित्वादिध्वंसप्रागभावादिक-
ल्पनायां गौरवात्तद्व्यंग्यत्वपक्षस्यैव युक्तत्वात्। अन्यथा नानापुरुषीयक्रमिकाऽपेक्षाबुद्धिसमसंख्यतुल्यव्यक्तिकनाना-
द्वित्वादिकल्पनेऽपि महागौरवात्, मम तु नित्यानामेव तेषां तत्तदपेक्षाबुद्धिव्यंग्यत्वे दोषाभावात्। नचैवं तेषां जाति-
त्वापत्तिः, *असमवायित्वे सत्यनेकसमवेतत्वस्य समवेतत्वस्यैव वा जातिव्यवहारनिमित्तत्वात्। नच विशेषेऽतिप्रसंगः,
तत्र मानाभावात्। किं च द्वित्वादेर्जन्यत्वे प्रतियोगितया(अश्रय)नाशाजन्यतन्नाशे स्वप्रतियोगिजन्यत्वसंबन्धेनापेक्षाबुद्धि-

१ बुद्धि. * समवायानुयोगिभिन्नत्वेसतीत्यर्थः.

त्वयोपगमात् । नच वहुपदशक्यतावच्छेदकं वहुवचनप्रवृत्तिनिमित्तं वा वहुत्वत्वमेकत्वद्वित्वान्यसंख्यात्वं, त्रित्वमारभ्य परार्द्धपर्य्यंते वृत्तिर्जातिविशेषो वा, राशित्वादिरूपवहुत्वे चापेक्षावुद्धिविशेषजन्यतावच्छेदकस्तद्व्याप्य एव जातिविशेषो वहुत्वत्वं, तदवच्छिन्नोपस्थितिश्चैकवचनांतराश्यादिपदादेवेति शाब्दवोधस्थले नानुपपत्तिः, प्रत्यक्षे च 'वहव' इत्यादौ क्वचित् दोषवशात्तदग्रहान्नानुपपत्तिरिति वाच्यम्, अनुभूयमानैकत्वप्रतीतेर्वहुत्वविशेषेण समर्थने द्वित्वादिप्रतीतेरप्येकत्वविशेषेणैव समर्थयितुं शक्यत्वात् वास्तवाभावे गौणानुपपत्तेरप्युक्तत्वाच्च । नच 'द्वाविमौ नीलपीतौ' इति गौणद्वित्वाद्विलक्षणं द्वाविमौ 'घटपटौ'इत्यत्र द्वित्वमनुभूयते, नचैकत्र ज्ञाने द्वित्वं प्रकारोऽन्यत्र तु नेत्यपि विनिगंतु[1] शक्यं, विजातीयज्ञानविषयत्वसंवन्धेन स्वस्थितेस्वप्रकारतया वुद्धिवैलक्षण्योपपादनमप्युभयत्र[2] तुल्ययोगक्षेमं । एकत्रापि[3] च घटे नीलत्वघटत्वाभ्यां द्वित्वमनुभूयत एव, अनुभूयत एव चैते वृक्षा वनमिति वहुत्वावच्छिन्नेऽपि केनचिदुपाधिनैकत्वमिति, स्वसामग्रीप्रभवैकत्वद्वित्वाद्यनंतपर्य्यायोपेतद्रव्य एवापेक्षावुद्धिहेतोरपेक्षात्मकभावे[4] यथा क्षयोपशमं कदाचिदेकत्वप्रकारकं कदाचिच्च द्वित्वादिप्रकारकं ज्ञानं[5] जायत इत्यपेक्षावुद्धिगम्यत्वमेव द्वित्वादेर्युक्तं[6] । अत एव नयरूपत्वादस्या नयांतरसंयोजनया सप्तभङ्गीसंगतिरपि सङ्गता, यादृशविषयताविशिष्टाया अपेक्षावुद्धेः परैर्जनकत्वं व्यंजकत्वं वाऽभ्युपगम्यते तादृशविषयतानिरूपितापेक्षात्वाख्यविषयता द्वित्वादौ नास्माकमसुलभा, सामान्यविशेषत्वादेरापेक्षिकत्वेऽपीयमेव रीतिरनुसर्तव्या । नचैवमनपेक्षैकत्वद्वित्वादिप्रत्यक्षानुपपत्तिः, द्रव्यनयालंवनेनानपेक्षात्मकविषयतांतरस्यापि स्वीकारात् । अत एव सापेक्षत्वान-

१ गतु. २ त्वस्मिन. ३ त्रयच. ४ एकात्रापि. ५ भावः. ६ प्रकारक ज्ञानं.

ह्याणां रूपरसादीनामिव सामान्येंद्रियग्राह्याणामपि सत्यप्येकावच्छेदेन समानदेशत्वे प्रतिनियतव्यंजकव्यंग्यत्वे विरोधाभावात् । सहचारदर्शनमात्रस्याकिंचित्करत्वात् , भेदश्च विरुद्धधर्म्माध्यासात्, सच न्यूनाधिकदेशपर्य्याप्तवृत्तिकत्वमित्याहुः । अपरे तु घटकुटकुड्यकुशूलेषु द्वित्वत्रित्वादिप्रतीतावेकतरनाशे तद्वृत्तेर्द्वित्वादेरपि संयोगादेरिव विनाशप्रत्ययादनित्यवृत्ति नानाव्यक्तिकमेव द्वित्वादिकं, आश्रयविनाशोत्पादाभ्यामेव तस्योत्पादविनाशौ, असमवायिकारणं त्वाश्रयस्यैकत्वं परिमाणं वा, एक(व्यक्त)वृत्तिकमेकत्वमिव तुल्यव्यक्तिवृत्तिकं द्वित्वाद्यपि नानेकं, तुल्यव्यक्तिवृत्तित्वादेः प्रतिवन्धकत्वात् , वुद्धिविशेषस्तद्व्यंजको न तूत्पादकः नित्येषु त्वकव्यक्तिकमनेकव्यक्तिकं वा नित्यमित्याहुः । वयं तु ब्रूमः जन्यत्वनयेऽपेक्षावुद्धेर्जन्यतावच्छेदकमेकत्वान्यसंख्यात्वं वाच्यं, यद्वैकत्वजन्यतावच्छेदकतया द्वित्वमारभ्य परार्द्धपर्य्यंतमेका जातिः सिद्ध्यति लाघवात् , नतु जन्यसंख्यात्वमेवैकत्वजन्यतावच्छेदकं, कारणकार्य्यैकार्थप्रत्यासत्तिभेदात् इति तस्यैव द्वित्वादिपरार्द्धपर्यंतसंख्यावृत्तिजातिविशेषितस्य तथात्वं । व्यंग्यत्वनये चैकत्वान्यसंख्याप्रत्यक्षत्वं उक्तजाति*विशेषप्रत्यक्षत्वं वाऽपेक्षावुद्धेर्जन्यतावच्छेदकं वाच्यं, द्वयोरप्यनयोर्मतयोरेको धान्यराशिरित्यादिप्रत्ययसिद्धे सामूहिकैकत्वे व्यभिचारः । न च तत्रैकत्वं गौणमेव वस्तुतस्त्वपेक्षावुद्ध्या राशिसेनावनादौ वहुत्वविशेप एवोत्पाद्यते व्यज्यते वेतिवाच्यम् , स्वारसिकैकत्वानुभवविरोधात् । एते वहवः कणाः, एते वहवः करितुरगरथपदातयः, एते वहवः आम्रनिंवधवखदिराः, इत्यादौ राशित्वसेनात्ववनत्वाद्यनापत्तेश्च । अपेक्षावुद्ध्या तत्र राशित्वादिरूपस्यैव वहुत्वस्योत्पत्तिरभिव्यक्तिर्वेति

१ कुशलेपु. २ न यैचै. * जातिविशेपविशिष्टप्रत्यक्षत्वमितितात्पर्यम् ३ वस्तु नस्तु. ४ चन.

नचाभावस्यापीदत्वेन प्रह्लादापादकाभावः, प्रथममभावाभावत्वयोर्निर्विकल्पके'अभाव' इत्याकारकप्रत्यक्षापत्तेर्दुर्वारत्वात् । इन्द्रियस्य(च) चक्षुःत्वगादिभेदभिन्नत्वेन महागौरवं, नच पृथक् प्रतियोगिधीहेतुत्वेऽपि'न'इत्याकारकप्रत्यक्षापत्तिः, उपस्थितस्य प्रतियोगिनोऽभावे वैशिष्ट्यभाने बाधकाभावात् । नचाभावो न घटीय इत्यादि बाधधीदशायां तदापत्तिः, अभावत्वावच्छेदेनाभावे तादृशबाधधियः आहार्य्यत्वात्, अभावत्वसामानाधिकरण्येन च तद्दशायामपि प्रतियोगिवैशिष्ट्यभानसंभवात् । यद्वा घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपिताऽभावविषयताकप्रत्यक्षे घटादिधियो हेतुत्वमन्यथा घटाद्यभाव इत्याकारकप्रत्यक्षं च न जायेत, निखिलप्रतियोगिज्ञानकार्य्यतावच्छेदकाक्रांततादृशप्रत्यक्षस्य यत्किञ्चित्प्रतियोगिज्ञानेऽसंभवात्, यावत्प्रतियोगिज्ञानस्य चासंभवात् । अभावत्वांशे निर्विकल्पकं त्वभावांशे यत्किंचित्प्रतियोगिविशिष्टविषयत्वाद्यत्किञ्चित्प्रतियोगिधीः साध्यमेवेति नानुपपत्तिरिति चेन्न। प्रतियोगिज्ञानाभावेप्यभावत्वमात्रेण प्रत्यक्षस्येष्टत्वात् 'शून्यमिदं दृश्यत' इत्यादिप्रत्ययात्, इत्थमेवाभावत्वस्य भावभेदस्य पिशाचादिभेदवद्योग्यस्य घटो नास्तीत्यादौ स्वरूपतो भानमिति प्राचां वचनस्योपपत्तेः । नञुल्लेखस्तु प्रतियोगिवाचकपदनियतो न सार्वत्रिकः, किञ्चोक्तरीत्या प्रतियोगिज्ञानस्य हेतुत्वे केवलाभावत्वनिर्विकल्पकापत्तिः, अभावत्वस्याखण्डत्वादन्यथाऽभावविशिष्टबुद्धावपि तन्निर्विकल्पकायोगात् । अपिच 'घटपटौ न'इत्यादिप्रत्यक्षं घटज्ञानपटज्ञानादिकार्य्यतावच्छेदकानाक्रान्ततया तद्विरहेऽपि स्यात्, तस्माद् घटत्वाद्यवच्छिन्नप्रकारतानिरूपितविषयताकप्रत्यक्षमेव लाघवात् घटादिधीकार्य्यतावच्छेदकं युक्तमिति घटास्तित्वनास्तित्वयोस्समप्रतियोगित्वाप्रति-

१ भोधक. २ जायते. ३ यावस्य. ४ नञू. ५ घटपटत्वा. ६ संप्रति.

पौर्वापर्यानवभासोपपत्तिरनंतकार्य्यकारणभावप्रति-
पेक्षत्वाभ्यामपि स्याद्वादः, अस्मदुक्त पक्ष एवापेक्षाबुद्धिद्वित्वबुद्ध्योः पौर्वापर्यानवभासोपपत्तिरनंतकार्य्यकारणभावप्रति-

Correction — as printed:

पेक्षत्वाभ्यामपि स्याद्वादः, अस्मदुक्त पक्ष एवापेक्षाबुद्धिद्वित्वबुद्ध्योः पौर्वापर्यानवभासोपपत्तिरनंतकार्य्यकारणभावप्रति-
बध्यप्रतिबन्धकभावादिकल्पनागौरवदूषणानवकाशश्चेति सर्वमवदातं । तस्मात् स्वसमये परसमये एकत्वद्वित्वादिप्रका-
रकनानाविधलौकिकव्यवहारे च नयापेक्षयैव विविक्तो बोध इति स्थितम् । फलितमाह—

**तेन सापेक्षभावेषु, प्रतीत्यवचनं नयः । अभावाभावरूपत्वात्, सापेक्षत्वं विधावपि ॥ ५ ॥**

'तेनेति' तेन—उक्तहेतुना सापेक्ष[1]भावेषु—परस्परप्रतियोगिकेषु धर्म्मेषु प्रतीत्यवचनं—अपेक्षात्मकं वाक्यं नय इति सिद्धं ।
नन्वेवं स्यान्नास्त्येवेत्येकवचनं नयः स्यान्नतु स्यादस्त्येवे[2]ति तदर्थस्य विधेरप्रतियोगिकत्वादत एवाह "विधावपि" अस्तित्वादि-
भावेऽपि अभावाभावरूपत्वात् नास्तित्वाद्यभावस्वरूपत्वात्तेन रूपेण प्रतियोगिनिरूपणाधीननिरूपणतया सापेक्षत्वमस्त्येव ।
अयंभावः—अभावज्ञानेऽपि न सर्वत्र प्रतियोगिज्ञानापेक्षा, प्रतियोगिज्ञानं विनापीदं[3]त्वप्रमेयत्वादिनाऽभावभानस्य सार्वजनीन[4]-
त्वात्, घटाभावत्वादिना घटाभावादिज्ञाने घटज्ञानाद्यपेक्षाध्रौव्यात् । तेन रूपेणैव[5] तेषां सप्रतियोगिकत्वं गृहीष्यते तर्हि
नास्तित्वाभावत्वादिनाऽस्तित्वादीनां तेन रूपेण तथात्वे तुल्यं । अभावाभावः प्रतियोग्येवेति परेषामपि मूलसिद्धांतात्सं-
योगादावेव विशेषणतात्वकल्पनया निर्वाहेण नास्तीति प्रतीतिबलादतिरिक्त एव स इति नव्यमतस्य निर्युक्तिकत्वात् ।
तस्मात्स्वरूपतो भावाभावयोरपि निष्प्रतियोगिकत्वं, विशिष्टतया तु द्वयोरपि [6]सप्रतियोगिकत्वमिति स्याद्वाद एव
श्रेयान् । अथ निष्प्रतियोगिकाभावपक्षे प्रतियोगिज्ञानस्याभावप्रत्ययाहेतुत्वे विना प्रतियोगिज्ञानं 'न' इत्याकारकप्रत्ययापत्तिः,

१ सापेक्षत्वाभावेषु. २ दस्त्येवेति. ३ तस्र. ४ नस्यात्. ५ रूपणेन तेषां संप्रति. ६ संप्रति.

विधौसापेक्षत्वनिर्णये ऽभावज्ञाने प्रतियोगिज्ञाना-नियमः

यत्किञ्चिद्व्यक्तिनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकं यावत्प्रत्येकं तावदवच्छिन्न(स्य)सत्त्वेऽवश्यं तद्धर्म्मावच्छिन्नोत्पत्तिरित्येव नियमात्, तद्धर्म्मव्याप्यधर्म्मावच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्य्यतानिरूपितेत्याद्युक्तौ व्याप्तिज्ञानपरामर्शयोः सतोर्बाधधीसत्त्वेऽप्यनुमित्यापत्तौ * तद्धर्म्मव्याप्यव्यापकधर्म्मावच्छिन्नयत्किञ्चिद्व्यक्तिनिष्ठकार्य्यतानिरूपितेत्याद्युक्तौ गौरवात्। घटत्वादिविशिष्टवैशिष्ट्यविषयकप्रत्यक्षत्वस्याभावलौकिकप्रत्यक्षत्वव्याप्यत्वात्तत्तद्भावलौकिकप्रत्यक्षत्वव्याप्यतत्तदभावलौकिकप्रत्यक्षत्वव्यापकत्वात्प्रकृतसिद्धेश्चेत्यादिनव्यकल्पनापि निरस्ता। एवं सति द्रव्यविषयकप्रत्यक्षस्य वस्तुविषयकप्रत्यक्षस्य वा यत्किञ्चित्पर्य्यायविशिष्टविषयकत्वनियमेन भावनिर्विकल्पकस्य शुद्धभावप्रत्यक्षस्यापि चासंभवादत एव सविचारणया सामान्यदृष्ट्या च सर्वं निर्विकल्पकं विशेषदृष्ट्या च सर्वं सविकल्पकमित्यनेकांतः पुरुषदृष्टांतेन संमतौ प्रतिपादितः। तथाहि "वंजणपज्जायस्स उ पुरुसो पुरुसो त्ति निच्चमविअप्पो। वालाइविगप्पं पुण पासइ से अत्थपज्जाओ॥३४॥ सविअप्पणिव्विअप्पं इय पुरिसं जो भणेज्ज अविअप्पं। सविअप्पमेव वा णिच्छएण ण स णिच्छिओ समये॥३५॥ व्याख्या—व्यंजयति व्यनक्ति चार्थानिति व्यंजनं शब्दः न पुनः शब्दनयस्तस्यर्जुसूत्रसमानपर्य्यायविषयत्वात्। तस्य पर्य्यायो वाच्यता तद्ग्राहकनयेन पुरुषः पुरुष इति पुरुषत्वप्रकारकज्ञानविषय इति नित्यमाजन्मनो मरणांतं यावदविकल्पः, पुरुषत्वातिरिक्ताप्रकारकज्ञानविषयः। इदमुपलक्षणं द्रव्यत्ववस्तुत्वादिनाप्यविकल्पत्वस्य शुद्धद्रव्योपयोगे तु पदद्वयस्य निर्धर्म्मकत्वलक्षणया शुद्धधर्म्मिविषयकभानविषयत्वमेवाविकल्पत्वं द्रष्टव्यं, से—तस्य पुरुषस्यार्थपर्य्यायः ऋजुसूत्राद्यर्थग्राहकनयः पुनर्वालादिविकल्पं वालादिभेदं

१ सात्त्ववस्य. * सद्धर्म. २ णिच्चि. ३ तद्ग्राहक.

योगिकत्वे तुल्ययोगक्षेमे त्वदुक्तहेतुसद्भावेऽपि लाघवाद्[1] भावांशत्यागेन केवलाभावस्येव केवलभावस्यापि न भानमिति वक्तुं शक्यत्वात्, निर्विकल्पके प्रमाणाभावात्। क्षयोपशमविशेषेणैव तत्तद्विशिष्टज्ञानोपपत्तौ तस्य तदकल्पकत्वात् अत एव "द्रव्यं पर्य्यायवियुतं, पर्य्याया द्रव्यवर्जिताः। क कदा केन किं रूपा, दृष्टा मानेन केन वा?॥१॥इत्यस्मत्संप्रदायवृद्धाःसंगिरंते[2]। शुद्धा[3]भावप्रत्यक्षं तु प्रतियोगितासंबंधावच्छिन्नप्रकारतानिरूपिताऽभावविषयताकप्रत्यक्ष एव विशेषणतायाः हेतुत्वान्न भवतीत्यपि रिक्तं वचः, प्रतियोगितामात्रेण द्रव्यं नास्ति मेयं नास्तीत्याद्यापत्तेः, प्रकारीभूतकिञ्चिद्धर्म्मावच्छिन्नत्वेन प्रतियोगिताविशेषणेऽपि न निस्तारः, घटाभावपटाभावयोरुभयोस्सन्निकर्षे घटाभावांशे प्रतियोगिविशेषितस्य पटाभावांशे च तदविशेषितस्य समूहालंबनस्य प्रसंगात्। किञ्चैवमिदंत्वादिनाऽभावप्रत्यक्षं न स्यान्न स्याच्चा[4]भावप्रतियोगी घट इत्याद्याकारं तादृशप्रत्यक्षेष्वपि पृथक्कारणत्वकल्पने चातिगौरवं, तस्मात्सन्निकर्षमात्रस्यैव किञ्चिद्धर्म्मावच्छिन्नविषयतानिरूपितविषयताकप्रत्यक्षत्वावच्छिन्ने विशिष्टाकारप्रत्यक्षत्वावच्छिन्ने वा हेतुत्वं, अतो नापायमात्रस्य विचारजन्यचरमशुद्धद्रव्योपयोगतुल्यतेति भावांशेऽभावांशे वा न शुद्धविषयकं प्रत्यक्षमित्यभाव एव सापेक्षो न भाव इति किमिदमर्द्धजरतीयम्। एतेनाभावलौकिकप्रत्यक्षस्य घटाद्यन्यतमविशिष्टविषयकत्वनियमाद्विशेषसामग्रीं विना सामान्यसामग्रीमात्रात्कार्य्यानुत्पत्तेर्नाभावनिर्विकल्पकं, "न" इत्याकारकप्रत्यक्षं वा विशेषणादिज्ञानरूपविशेषसामग्र्यभावात्। नचाभावलौकिकप्रत्यक्षत्वघटत्वादिविशिष्टविषयकप्रत्यक्षत्वयोर्व्याप्यव्यापकभावाभावात्कथं विशेषसामग्रीत्वमिति वाच्यं, कार्य्यतावच्छेदकीभूततद्धर्म्माश्रय-

विधौसापेक्षत्वनिर्णयेऽभावज्ञाने प्रतियोगिज्ञाना नियमः

॥ ११ ॥

१ चाभावांश. २ तो. ३ शुद्धाभावप्रत्यक्षप्रतियोगिता. ४ च.

प्रकारापेक्षया प्रतिपर्य्यायं वस्तुनि सप्तैव भङ्गाः, धर्म्मभेदेनानन्तसप्तभङ्गीसम्भवेऽपि प्रतिधर्म्मं सप्तानामेव भावात्, अयं च नियमः प्रतिपर्य्यायं प्रतिपाद्यपर्य्यनुयोगानां सप्तानामेव सम्भवात्, तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात्, तस्या अपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात्, तस्याऽपि सप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्म्माणां सप्तविधत्वस्यै-वोपपत्तेरिति । अत्र विधिमुख्यविषयताकः प्रथमस्य, निषेधमुख्यविषयताको द्वितीयस्य, क्रमादुभयमुख्यविषयताकस्तृती-यस्य । न च क्रमवलादेव तत्र ज्ञानद्वयमर्थसिद्धमित्याद्यभङ्गद्वयानतिरेकः, क्रमगर्भोभयप्राधान्यवोधकत्वाभिप्रायेणोभ-यपदप्रयोगात्तत्रैकत्र द्वयमिति विषयशालिनो वोधान्तरस्यानुभविकत्वात् । न च तत्र शब्दयोः क्रमव्यापारेऽप्यर्थस्य विशिष्टस्य क्रमाघटितत्वात् क्रमाद्यनतिप्रयोजनं, "न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते" ॥ १ ॥ इति नयाश्रयणाच्छब्दगतस्याऽपि क्रमस्यार्थेऽध्यारोपणात् । अस्तु वा क्रमादिति वचनं ज्ञानाकार-विशेषोपलक्षकमेव । युगपद्विधिनिषेधात्मनाऽवक्तव्यत्वमुख्यविषयताकश्चतुर्थस्य, तादृशो वोधः अवक्तव्यपदस्य खण्डशः शक्त्या कारितो विशेषशक्त्या वेत्यन्यदेतत् । नचानुभयवचनेनैवास्य गतार्थताऽऽशङ्कनीया, अनुभयस्यैकतरप्राधान्यपर्य्य-वसायित्वेनाद्यभङ्गद्वयान्तर्भावानतिक्रमात् । नचोभयपदेन युगपदुभयप्राधान्यवोधसम्भवादवक्तव्यत्वभङ्गोऽनुत्थानोपहत एव, यथा पुष्पदन्तपदाच्चन्द्रत्वसूर्य्यत्वाभ्यां चन्द्रसूर्य्ययोर्युगपदेव वोधस्तथोभयपदेन सत्त्वासत्त्वाभ्यां युगपदेकोभयात्म-कवस्तुवोधसम्भवादत एव "पुष्पदन्तौ पुष्पदन्तावेकोक्त्या शशिभास्करौ" इत्युक्तेरेकोक्त्येत्यस्यैकया शक्त्येत्यर्थः, पुष्पद-

१ मेचयसंभवा. २ विव. ३ न. ४ कारता. ५ वित्यन्तैकोक्तो.

यो भणेत् अविकल्पमेव
पश्यति । सविकल्पं निर्विकल्पं स्यात्काराङ्कितं तदुभयपदघटितमहावाक्यबोधरूपपुरुषद्रव्यस्य
सविकल्पमेव वा, निश्चयेन एकान्तेन समये परमार्थे, न निश्चितः निश्चयो निश्चितं तदस्यास्तीति निश्चितः 'अर्श आदि-
त्वादच् प्रत्ययः' न तदर्थे इत्यर्थः, दुर्नयाभिनिवेशान्नयज्ञत्वाद्वा संपूर्णानेकान्तवस्तुस्वरूपापरिच्छेदादिति रहस्यम् ॥ २ ॥
तदेवं निषेधवद्विधावपि सापेक्षत्वं प्रतिपादितं । एवं स्वद्रव्याद्यपेक्षया सन् परद्रव्याद्यपेक्षया चासन्निति तृतीयोल्लि-
ख्यमानावच्छेदकप्रतीत्यापि सापेक्षत्वं भावनीयमत एव परेऽपि व्याप्यवृत्तावप्यव्याप्यवृत्ताविवे[1] प्रतीतिबलात्तत्तदवच्छि-
न्नवृत्तिकत्वं स्वीकुर्वते, इति दिक् ॥ ५ ॥ नयप्रमाणवाक्ययोः कथं भेद इति व्युत्पादयति—

**सप्तभंग्यात्मकं वाक्यं, प्रमाणं पूर्णबोधकृत् । स्यात्पदादपरोल्लेखि, वचो यच्चैकधर्म्मगम् ॥ ६ ॥**

"सप्तेति" सप्तभंग्यात्मकं स्यादस्त्येव स्यान्नास्त्येवेत्यादिकं वाक्यं प्रमाणं, यतः पूर्णबोधकृत्, सप्तविध[3]जिज्ञासानिवर्त-
कशाब्दबोधजनकतापर्य्याप्तिमत्, तदाहुः—स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमो भङ्गः १ स्यान्नास्त्येव सर्वमिति
निषेधकल्पनया द्वितीयो भङ्गः २ स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीयो भङ्गः ३ स्यादवक्तव्य-
मेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः ४ स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च
पञ्चमः ५ स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च पष्ठः ६ स्यादस्त्येव स्यान्नास्त्येव
स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तमः । ७ । इति' एते च विधिनिषेध-

---

१ वाप्य. २ चिव. ३ विधि.

...नन्वप्येवम्, तत्र च श्रुतपदप्रतिपाद्यधर्म्मांशे लौकिकी विषयता स्यात्पदद्योत्या, अनन्तधर्म्मात्मकत्वांशे च
लोकोत्तरेति विशेषः" इत्यभिसन्दधते, तन्मतमनुरुध्य प्रमाणलक्षणान्तरं समुच्चिनोति, "च" पुनः यद् वाक्यं "एकधर्म्मगं"
प्रतिनियतैकधर्म्मप्रतिपिपादयिषया प्रयुक्तं स्यात्पदादपरे येऽनन्ता धर्म्मास्तॉल्लिखतीत्येवं शीलं वाक्यं तदपि प्रमाणवाक्यं
व्यवहर्तव्यमित्यर्थः । अयं च समुच्चयः मयापि सम्प्रदायमतमिति कृत्वा समुन्नीतो, वस्तुतो नयदुर्नयविभागो न दैगम्बर एव ।
हेमसूरिभिरपि "सदेव सत्स्यात्सदिति त्रिधार्थो मीयेत दुर्नीतिनयप्रमाणैः" इत्यादिविभज्याभिधानात्, आकरे नयतदाभा-
सानां व्यक्तैर्बोधितत्वाच्च । अवधारणी च भाषा एकान्तवादात्मकैव निषिद्धा, नतु नयरूपापि, तस्याः प्रमाणपरिकरत्वेन
तत्रावधारणीत्वस्य निश्चायकत्वरूपभाषालक्षणान्वयेनैव सिद्धान्तसिद्धत्वात्, अत एव निराकाङ्क्षानासन्नादिस्थले शब्दसमा-
नाकारमानसस्वीकारे किमपराद्धं शाब्दबोधेनेति पर्य्यनुयोगे मानसस्य संशयाकारस्यापि सम्भवात् निश्चायकरूपशाब्दबोधा-
नुपपत्तेरेव यौक्तिकैर्निराकृतः । न च भाषामात्रस्यावधारणीत्वेऽप्याराधकत्वविराधकत्वतदुभयानुभयैः सत्यादिभेदचतु-
ष्टयोपदेशान्नयभाषाया देशाराधकत्वेन तृतीयभङ्ग एव निक्षेपात्साधूनामनादरणीयत्वमित्यपि युक्तं, चतुर्धा विभागस्य
द्रव्यभावभाषायामेवोपदेशात्, तत्र च परिगणितमिश्रभाषाभेददशकानन्तर्भावादेव नयभाषायां दोषाभावात्, श्रुतभाव-
भाषायाश्च, तृतीयभाषायां एवानधिकृतत्वाच्चारित्रभावभाषायामाद्यन्तयोर्भाषयोरधिकृतत्वेऽप्यायुक्ततया चतसृणामपि
भाषणे आराधकत्वाविरोधस्य प्रज्ञापनादावुक्तत्वात् । किं च प्रतीत्यसत्यालक्षणमत्र स्फुटमेव किं नोन्नीयते ! नच सप्त-

१ कं. २ य द्रवमपि. ३ दै. ४ सत. ५ श्चयकत्वारूप. ६ सिद्धत्वोदत्. ७ कानांर्त.

ब्दादिषु तृतीयः । प्रथमद्वितीयसंयोगे चतुर्थः, तेष्वेव चानभिधेयसंयोगे पञ्चमषष्ठसप्तमवचनमार्गाः सम्भवन्ति । अथवा शब्दनये पर्य्यायान्तरसहिष्णौ सविकल्पो वचनमार्गस्तदसहिष्णौ तु निर्विकल्प इति द्वावेव भङ्गौ, अवक्तव्यभङ्गस्तु व्यञ्जननये न सम्भवत्येव, श्रोतरि शब्दोपरक्तार्थबोधनस्यैव तत्प्रयोजनत्वात्, अवक्तव्यबोधनस्य च तन्नये सम्प्रदायविरुद्धत्वेन तथाबुबोधयिष(षा)या एवासम्भवादित्यधिकमस्मत्कृतानेकान्तव्यवस्थायां, तदेवं प्रतिपर्य्यायं सप्तप्रकारबोधजनकतापर्य्याप्तिमद्वाक्यं प्रमाणवाक्यमिति लक्षणं सिद्धं । इत्थञ्च तदन्तर्भूतस्य तद्बहिर्भूतस्य वाऽन्यतरभङ्गस्य प्रदेशपरमाणुदृष्टान्तेन नयवाक्यत्वमेवेत्यर्थतो लभ्यते । इतरप्रतिक्षेपी तु नयो नयाभासो दुर्नयो वेत्युच्यते । मलयगिरिचरणास्तु "नयो दुर्नयः सुनयश्चेति दिगम्बरी व्यवस्था नत्वस्माकं नयदुर्नययोरर्थाऽविशेषात् । स्याच्छब्देन विवक्षितधर्म्मोपरागेण कालादिभिरभेदवृत्त्याऽभेदोपचाराद्वाऽनन्तधर्म्मात्मकवस्तुप्रतिपादने प्रमाणवाक्यस्यैव व्यवस्थितेः, अत एव स्याच्छब्दलाञ्छितत[3]यैव सर्वत्र साधूनां भाषाविनयो विहितः, अवधारणीभाषा च निषिद्धा तस्या नयरूपत्वात् नयानां च सर्वेषां मिथ्यादृष्टित्वात्, तथा चानुसरन्ति "सव्वे णया मिच्छावायिणो"त्ति, न च सप्तभङ्गात्मकं प्रमाणवाक्यं, एकभङ्गात्मकं च नयवाक्यमित्यपि नियन्तुं शक्यं, सप्तभङ्गाः सप्तविधजिज्ञासोपाधिनिमित्तत्वात्, न च तासां सार्वत्रिकत्वं, को जीव ? इतिप्रश्ने लक्षणमात्रजिज्ञासया "स्याद्ज्ञानादिलक्षणो जीव" इति प्रमाणवाक्यरूपस्योत्तरस्य सिद्धान्त[4]सिद्धत्वात्, स्यात्पदस्य चात्रानन्तधर्म्मात्मकत्वद्योतकत्वेन प्रामाण्याङ्गत्वं, द्योतकत्वं चात्रोपसम्पदानकी शक्ति-

१ मस्यक्त. २ ये. ३ तैव. ४ सिद्धन्तत्वात्.

नयदुर्नययोर्मलयगिर्यभिप्रायः

कृष्णत्वस्याभावादनन्ते व्यभिचारात्, पृष्टावच्छेदेन कृष्णेप्युदरावच्छेदेन शुक्लत्वोपलंभाच्च, स्याच्छब्दसंयोजनया नयवाक्यत्वमित्याह समन्तभद्रः । लक्ष्यलक्षणादिव्यवहारोऽपि नयवाक्यैरेव सिद्ध्यति उद्देशत्रयलौकिकवोधस्यानतिप्रसक्तस्य तेभ्य एव सिद्धेः, प्रमाणवाक्यं त्वलौकिकवोधार्थं सप्तभङ्गात्मकमेवाश्रयणीयमत एव तद्व्यापकत्वं सम्मत्यादौ महता प्रयत्नेन साधितमिति किमतिविस्तरेण ॥ ६ ॥

नन्वेकत्र वस्तुन्यनेकाकारा प्रमाणधीः, एकाकारा च नयधीः कथमुत्पाद्यत इति जिज्ञासायामाह—

**यथा नैयायिकैरिष्टा चित्रेऽनेकैकरूपधीः । नयप्रमाणभेदेन सर्वत्रैव तथार्हतैः ॥ ७ ॥**

यथेति–यथा नैयायिकैः "चित्रे" नीलपीतादिना शवले घटादावनेकरूपाद्याकारा, एकरूपा च चित्राकारा धीः "इष्टा" ऽभ्युपगता, तथानुभवस्वारस्यान्मतभेदाश्रयणाद्वा तथा सर्वत्रैव वस्तुन्येकानेकरूपतया चित्रे प्रमाणनयभेदेन द्विविधा बुद्धिरार्हतैरिष्टा, अनुभवसिद्धेऽर्थे विरोधाभावादिति भावः । यथा च सर्वस्य वस्तुनश्चित्रत्वं तथोक्तमस्माभिरात्मख्यातौ विस्तरभिया नेह प्रतन्यते, चित्ररूपे तु मतभेदं तर्करसिकव्युत्पत्त्यर्थमुपदर्शयामः । तत्र नीलं नीलान्यरूपासमवायिकारणं नवेति चित्ररूपे विप्रतिपत्तिः, विधिकोटिः सामानाधिकरण्येन निषेधकोटिरवच्छेदेन, तेन नांशतो वाधः सिद्धसाधनं वा । यत्तु नीलरूपासमवायिकारणकं पीतरूपासमवायिकारणकं न वेति विप्रतिपत्तिरिति तन्न, नीलरूपासमवायिकारणस्य नीलस्य पक्षत्वे वाधात्, चित्ररूपस्य पक्षत्वे आश्रयासिद्धेः । यदपि नीलरूपासमवायिकारणकवृत्तित्वविशिष्ट-

---

१ श्रो. २ तिप्रति.

भङ्गात्मकवाक्यस्यैव प्रतीत्यसत्यात्वं, अपेक्षात्मकबोधजनकवाक्यत्वस्यैव तल्लक्षणत्वात्, अन्यथैकत्रापेक्षया ह्रस्वदीर्घादिलौकिकवचनस्यालक्ष्यत्वापत्तेः । नच सत्या सर्वत्रालौकिक्येव लक्ष्या, जनपदसत्यादिभेदानुपसङ्ग्रहापत्तेः । ननु तथाप्युत्सर्गतोऽनादरणीयत्वादेव नयदुर्नयभाषयोरविशेषः, तथाचोक्तं वादिना "सीसमइविप्फारणमेत्तत्थोऽयं कओ समुल्लावो । इहरा कहामुहं चेव णत्थि एयं ससमयंमि" ( सम्मतितृतीयकाण्डे गाथा २५ ) इति चेत् ? न, शिष्यमतिविष्फारकत्वं हि नयवाक्यस्य, प्रमाणात्मकमहावाक्यजन्यशाब्दबोधजनकावान्तरवाक्यार्थज्ञानजनकत्वं, तदनुकूलाकाङ्क्षोत्थापकत्वं वा, तेन तस्यादरणीयत्वस्यैव सिद्धेः, तदुक्तं वादिनैव "पुरिसज्जायं तु पडुच्च जाणओ पण्णविज्ज अन्नयरं । परिकम्मणानिमित्तं वाहेही सो विसेसंपि"त्ति ( सम्मति प्रथमकाण्डे गाथा ५४ ) प्रमाणवाक्यमपि ह्यनेकान्तरुचिशालिनं पुरुषविशेषमधिकृत्यैव प्रयुज्यते, तदनयोर्द्वयोरपि कारणिकत्वे प्राप्ते स्वस्वकाले उत्सर्गिकत्वमेव न्यायसिद्धं विप्रतिसिद्धकारणविधिस्थले तथाव्युत्पत्तेः, तस्मात् "स्यात् ज्ञानादिलक्षणो जीव" इत्यपि सुनयवाक्यमेव, एकभङ्गरूपत्वात् । प्रमाणवाक्यता तत्राप्युत्थाप्याकाङ्क्षाक्रमेण भङ्गषट्कसंयोजनयैव । सकलादेशत्वञ्च प्रतिभङ्गमनन्तधर्मात्मकत्वद्योतनेन अन्यथा च विकलादेशत्वमित्येके । अखण्डवस्तुविषयत्वेन त्रिष्वेवाद्यभङ्गेषु तत्, चतुर्षु चोपरितनेष्वेकदेशविषयत्वेन विकलादेशत्वमित्यन्ये । अयं व्युत्पत्तिविशेषः सर्वसप्तभङ्गीसाधारणः, स्याच्छब्दलाञ्छितैकमात्रेण तु न प्रमाणवाक्यविश्रामः सुनयवाक्यार्थस्यैव ततः सिद्धेः, अत एव कृष्णसर्प इत्यादिविशेषणविशेष्यभावबोधकवाक्येऽपि सर्पमात्रे

त्याहुः। शिरोमणिभट्टाचार्य्यमतानुसारिणस्तु चित्रघटेऽव्याप्यवृत्तीन्येव नीलपीतादीनि नानारूपाणि, एकरूपमिति प्रतीते-
रेकौ धान्यराशिरितिवत् समूहैकत्वविषयत्वात् सविषयावृत्तिव्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वविरोधस्त्वप्रामाणिक
एव, अत एव "लोहितो यस्तु वर्णेन, मुखे पुच्छे च पाण्डुरः। श्वेतः खुरविषाणाभ्यां, स नीलो वृष उच्यते" इति स्मृति-
रप्युपपद्यते। अथाव्याप्यवृत्तिनीलादिकल्पने गौरवं, तथाहि अवच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलेतररूपा-
दीनां प्रतिबन्धकत्वमस्मिन्पक्षे वाच्यम्, अन्यथा पीतावयवावच्छेदेन नीलोत्पत्तिप्रसङ्गात्, न च नीलस्य स्वाश्रयावच्छेदेन
नीलजननत्वस्वाभाव्यादेव न तदापत्तिः, विनैतादृशप्रतिबध्यप्रतिबन्धकभावं तथास्वाभाव्यानिर्वाहात्। ननु समवायेन
नीलं जायत एव पीतावयवावच्छेदेनेत्यत्र चापादकाभाव इति चेत्? न, समवायस्येवावच्छेदकताया अपि कारणनियम्यत्वात्,
एवं च नीलादौ नीलेतररूपादीनां नीलेतररूपादौ वा नीलादीनां प्रतिबन्धकत्वे विनिगमकाभावः, मम तु नीलेतररूपादौ
नीलादीनां न प्रतिबन्धकत्वं, नीलपीतारब्धे नील(नी)रूपत्वप्रसङ्गस्य बाधकत्वादितिचेत्? मैवं, ममापि नीलत्वादिकमेव प्रति-
बध्यतावच्छेदकं ननु नीलेतररूपत्वादि गौरवादिति वक्तुं शक्यत्वात्, न च नीलत्वेन प्रतिबन्धकत्वं ननु नीलेतरत्वेन गौरवा-
दित्येव किन्न स्यादिति वाच्यं, प्रतिबन्धकतावच्छेदकगौरवस्यादोषत्वात्। अस्तु वाऽवच्छेदकतया नीलादौ समवायेन नीला-
दीनामेव हेतुत्वं, न च नानारूपवत्कपालारब्धघटनीलस्य तत्कपालावच्छेदेनोत्पत्तिप्रसङ्गः, केवलनीलत्वादिनैव तद्धेतुत्वात्, न
च केवलत्वं नीलाभाव(वा)समानाधिकरणत्वमिति गौरवं, अनवच्छिन्नं(न्नस्य)समवायेन नीलादिहेतुत्वस्यैव तदर्थत्वात्, समवा-

१ कोन्यरा. २ वृत्तिजाते. ३ स्वप्रा. ४ भ्याः. ५ स्मृति. ६ न्नी.

रूपत्वं पीतरूपासमवायिकारणवृत्ति नवेति केषाञ्चिद्विप्रतिपत्त्युद्भावनं तदपि न रमणीयं, विशिष्टस्य विशिष्टाधेयताया वाऽनतिरिक्तत्वादिति दिक् । तत्र साम्प्रदायिकाः । नानारूपवदवयवारब्धे वस्तुनि नीलपीतादिभिरेकं सम्भूय चित्रं रूपमारभ्यते, न च सामग्रीसत्त्वान्नीलादिभिः नीलादेरपि तत्र जननापत्तिः, अगत्या नीलेतररूपादेः नीलादिकं प्रति प्रतिबन्धकत्वकल्पनात्, प्रतिबन्धकतावच्छेदकः सम्बन्धः स्वसमवायिसमवेतत्वं प्रतिबध्यतावच्छेदकश्च समवायः, चित्रत्वावच्छिन्नेऽपि नीलेतरपीतेतररूपत्वादिनैव हेतुता, तेन न केवलनीलकपालारब्धे चित्रोत्पत्तिप्रसङ्गः । यत्त्ववयवनिष्ठनीलाभावादिषट्कस्यैव चित्रं प्रति हेतुत्वमिति तत्र नीलपीतोभयकपालारब्धे घटे पाकनाशितावयवपीते स्वचित्रेऽवयवे व्याप्यवृत्तिनीलोत्पत्तिकाले चित्रोत्पत्त्यापत्तिः, न च कार्य्यसहभावेन नीलाभावादीनां तद्धेतुत्वादयमदोषः, नीलपीतश्वेतत्रितयकपालारब्धे पीतश्वेतयोः क्रमेण नाशे श्वेतनाशकालेऽपि तदापत्तेरिति, पाकजचित्रे च न व्यभिचारः, पाकादेवावयवे नानारूपोत्पत्त्यनन्तरमेवावयविनि चित्रस्वीकारात्, पाकजचित्रस्वीकारे च विजातीयचित्रं प्रति नीलेतरत्वादिना हेतुता, अग्निसंयोगजचित्रे चावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताका नीलजनकाग्निसंयोगादेरभावा रूपजनकविजातीयाग्निसंयोगाश्च हेतवः, अस्तु वा तेजःसंयोगमात्रजन्ये विजातीये चित्रे विजातीयतेजःसंयोगस्य हेतुत्वं, पाकरूपोभयजन्ये विजातीये चित्रे चोभयोरेव, रूपमात्रजाऽतिरिक्ते एव वा विजातीयतेजःसंयोगो हेतुः, फलबलेन वैजात्यकल्पनात् । नचाग्निसंयोगजमात्रातिरिक्ते रूपमेव हेतुरस्तु इति विनिगमकाभावः, उभयस्थले नीलेतरादिसमाजाभावस्यैव विनिगमकत्वादि-



१ नीलेनरूपादेनीलादिकं प्रतिबंधकत्वकल्पना. २ देवयचे. ३ पाकचि. ४ ती. ५ न्नयोगि.

रक्तं न स्यात्समवायेन रूपं प्रति तेन
कपाले रूपसत्त्वात्, अपि च नीलपीतवत्यग्निसंयोगात्कपालनीलनाशात्तदवच्छेदेन भातिगौरवं, अथावच्छिन्ननीलादौ नीला-
रूपस्य प्रतिबन्धकत्वात्, तदवच्छिन्नरूपे तदवच्छिन्नरूपस्य प्रतिबन्धकत्वकल्पने व्याप्यवृत्तिनीलोत्पत्तौ चावयविनि नीलाभा-
भावादिपट्कमवयवगतमवयविगतं च हेतुः, रक्तनीलारब्धे रक्तनाशकपाकेन क्वचिद्रक्तोत्पत्तौ च प्राक्तननीलनाशादेवावच्छिन्ननीलोत्पत्तिरिति चेत् ?
वाभावान्नावच्छिन्ननीलोत्पत्तिः, केवलनीले पाकेन नीलजनकपाके सति प्राक्तननील(ला)नाशेन तत्तदवच्छिन्ननानानीलकल्पनापेक्षया
न, नीलपीतश्वेताद्यारब्धे श्वेताद्यवच्छेदेन नीलजनकपाके सति प्राक्तननील(ला)नाशेन तत्तदवच्छिन्ननानानीलकल्पनापेक्षया नीलादेर्हेतुत्वं,
एकचित्रकल्पनाया एव लघुत्वात्, अथ व्याप्यवृत्तिरूपस्याप्यवच्छेदकतया नीलादिकं प्रत्येव समवायेन नीलादेर्हेतुत्वं,
नचैवं घटेऽपि तया नीलाद्युत्पत्तिः, अवयवनीलत्वेन द्रव्यविशिष्टनीलत्वेन वा तद्धेतुत्वात्; नच नीलमात्रपीतमात्रकपालिका-
द्व्यारब्धनीलपीतकपाले तदापत्तिः, नीलकपालिकावच्छिन्नतदवच्छेदेन तदुत्पत्तेरिष्टत्वात्, अस्तु वा तया नीलादौ नीले-
तररूपादेरेव विरोधित्वमिति चेत्? न, नीलादौ नीलेतररूपादिप्रतिबन्धकत्वेनैवोपपत्तौ तत्र नीलादिहेतुतायां मानाभावेन
नानारूपवदवयवारब्धे चित्ररूपस्यैकस्यैव प्रामाणिकत्वात्, व्याप्यवृत्तेरवच्छेदकायोगात्, नीलेतरादौ नीलादेः प्रतिबन्धकत्वे
ऽविनिगमाच्च। यदि च स्वाश्रयसम्बन्धेन नीलं प्रति स्वव्यापकसमवायेन नीलरूपं हेतुरुपेयते नीलपीताद्यारब्धस्थले च
स्वाश्रयसम्बन्धेन नीलरूपस्य पीतकपालेऽपि सम्भवेन व्यभिचारादुक्तसम्बन्धेन हेत्वभावादेव न तत्र नीलोत्पत्तिरिति विभा-
व्यते तदा नीलं प्रति नीलेतररूपादेः प्रतिबन्धकत्वं चित्ररूपवादिना न कल्पनीयमित्यतिलाघवं। एवञ्च सामानाधिकरण्य-

१ व्याप्या. २ नीलाशब्दे. ३ विन. ४ स्यैकपा. ५ त्वे.

सम्बन्धावच्छिन्नप्रतियोगिताको नीलेतराभावः समानावच्छेदकत्वप्रत्यासत्या नीलहेतुरित्यपि निरस्तं, सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन तत्सम्बन्धावच्छिन्नप्रतियोगिताकनीलेतराभावासत्त्वाच्चेति बहवः सम्प्रदायमादधते।केचित्तु विजातीयचित्रं प्रति स्वविजातीयत्वस्वसंवलितत्वोभयसम्बन्धेन रूपविशिष्टरूपत्वेनैव हेतुत्वं, स्ववैजात्यञ्च चित्रत्वातिरिक्तं यत्स्ववृत्तितद्भिन्नधर्म्मसमवायित्वं, स्वसंवलितत्वञ्च स्वसमवायिसमवेतद्रव्यसमवायिवृत्तित्वं, न च स्वत्वाननुगमः, सम्बन्धमध्ये एव तत्प्रवेशात्सबन्धाननुगमस्य चाऽदोषादित्याहुः, परेतु नीलपीतोभयाभावपीतरक्तोभयाभावादीनां स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नप्रतियोगिताकानां (समवायसम्बन्धावच्छिन्नप्रतियोगिताकानाञ्च) विजातीयपाकोभयाभावादीनां यावत्त्वावच्छिन्नप्रतियोगिताक एकोऽभावश्चित्रत्वावच्छिन्नं प्रति हेतुरित्याहुः। रूपत्वेनैव चित्रं प्रति हेतुत्वं, कार्य्यसहभावेन चित्रेतराभावस्याहेतुत्वेनानतिप्रसङ्गादित्यन्ये। परे तु चित्रत्वावच्छिन्ने रूपत्वेनैव हेतुत्वं, नीलपीतोभयारब्धवृत्तिचित्रत्वान्तरवैलक्षण्यावच्छिन्ने च नीलपीतोभयत्वेन हेतुता, एवं त्रितयारब्धे तत्त्रितयत्वेन नीलपीतोभयादिमात्रारब्धे च नीलपीतादीतररूपत्वेन प्रतिबन्धकत्वान्न त्रितयारब्धचित्रवति द्वितयारब्धत्वप्रसङ्गः, न चैवं गौरवं, प्रामाणिकत्वात्, वस्तुतः समवायेन द्वितयजचित्रादौ स्वाधिकरणपर्य्याप्तवृत्तिकत्वसम्बन्धेनैव द्वितयादीनां हेतुत्वं, नातः प्रागुक्तप्रतिबन्धकत्वकल्पनागौरवमित्याहुः। उच्छृङ्खलास्तु नीलपीतरक्ताद्यारब्धघटादौ नीलपीतरक्तादिभ्य एव नीलपीतोभयजपीतरक्तोभयजतत्त्रितयजादीनामुत्पत्तिः सर्वेषां सामग्रीसत्त्वात्, किन्त्वत्र चरमं व्याप्यवृत्तिरितराणि त्वव्याप्यवृत्तिनीति विशेषः, नचैकमेवं तद-

१ स. २ स्वयंत्र. ३ त्व. ४ ध्येरा. ५ यौ. ६ त्वां. ७ त्व. ८ द्व. ९ नात्र.

स्त्विति वाच्यम्, तत्तदवयवद्वयमात्रावच्छेदेनेन्द्रियसन्निकर्षे विलक्षणविलक्षणचित्रोपलम्भात्, न च नीलपीतादिविशिष्टचित्रेणावान्तरचित्रप्रतीतिसम्भवः, अखण्डेऽभ्रसामान्यचित्रत्वेनाखण्डावान्तरचित्रत्वानां सामानाधिकरण्यप्रत्ययात्, नचेदेवं तदा नीलाद्यविशेषिता ये नीलादिभेदास्तत्तदाश्रयरूपसमुदायेनानुगतचित्रप्रतीतेश्चित्रत्वं नीलादिभेदसमुदायेन नीलाद्यनुगतप्रतीतिसम्भवान्नीलत्वादिकमपि च विलीयेतेति, जातेरव्याप्यवृत्तित्वे पुनरस्त्वेकमेव तत् किञ्चिदवच्छेदेन तत्र नीलत्वपीतत्वरक्तत्वविलक्षणचित्रत्वादिसम्भवादित्याहुः । तदिदमखिलमशिक्षितप्रलापमात्रं, चित्रपटादौ चित्ररूपस्यैव प्रतिपत्तेरनुभवविरुद्धत्वात् शुक्लादिरूपाणामपि परस्परभिन्नानां साक्षात्सम्बन्धेन निर्विगानं तत्र प्रतीतेः, प्रत्येतव्यकल्पनागौरवेण प्रतीतिबाधे रूपादेस्त्रुटिमात्रगतत्वापत्तेः, तदिदमाहुः सम्मतिटीकाकृतः "नच चित्रपटादावपास्तशुक्लादिविशेषरूपमात्रं तदुपलम्भान्यथानुपपत्त्यास्तीत्यभ्युपगन्तव्यं, कथं ? चित्ररूपः पट इति प्रतिभासाभावप्रसक्तेरिति" । एकाधिकरण्यावच्छिन्नशुक्लादिसमुदाय एव कथञ्चित्समुदायातिरिक्तचित्रमिति तत्र शुक्लाद्यग्रहे चित्राग्रहप्रसक्तिरित्येतत्तात्पर्यं, किञ्चैवं[3] शुक्लावयवावच्छेदेनापि चक्षुः सन्निकर्षेण चित्रोपलम्भः स्यात्, अथ चित्रत्वग्रहे परम्परयाऽवयवगतनीलेतररूपपीतेतररूपादिमत्त्वग्रहो हेतुः, अत एव त्र्यणुकचित्रं चक्षुपा न गृह्यत इत्याचार्याः, नच चित्रत्वनिष्ठविषयतया चित्रत्वग्रहे स्वविशेष्यसमवेतसमवेतत्वसम्बन्धेनोक्तस्य हेतुत्वे घटावयवगततद्ग्रहात् शुक्लावयवावच्छेदेन चित्रपटसन्निकर्षेऽपि तद्रूपचित्रत्वप्रत्यक्षापत्तिरिति वाच्यं, विशेष्यतया चित्रत्वप्रकारकप्रत्यक्ष एवं[4] विनिर्युक्तसम्बन्धेन तद्धेतुत्वात्, नच नीलेतररूपत्वाद्यव-

---

१ चित्रपदो चित्रेवरूप. २ त्तेः. ३ चि. ४ वं चरमवेतत्वन्.

नीलत्वपीतत्वादिनावयवगतनीलपीतादिग्रहेऽप्यवयविचित्रप्रत्यक्षोत्पादादिति वाच्यं, विल-
च्छिन्नप्रकारताग्रहो न हेतुः नीलत्वपीतत्वादिनावयवगतनीलपीतादिग्रहेऽप्यवयविचित्रप्रत्यक्षोत्पादादिति वाच्यं, विल-
क्षणचित्रप्रत्यक्षे तेन तेन रूपेण तत्तद्ग्रहस्यापि हेतुत्वात्, वस्तुतो नीलेतररूपत्वादिव्याप्यत्वेन नीलेतररूपत्वपीतत्वाद्यनु-
गमान्न क्षतिरितिचेत्? न, त्र्यणुकचित्ररूपाग्रहे चतुरणुकचित्रप्रत्यक्षानुपपत्तेश्चित्रावयवारब्धचित्रग्रहेऽवयवविषयकनीलेतर-
रूपत्वादिव्याप्यचित्रत्वावच्छिन्नप्रकारकग्रहस्यैव हेतुत्वात्, यदि च नीलेतररूपपीतेतररूपादिमदवयवावच्छेदेनेन्द्रियस-
न्निकर्षस्यावयवनीलादिगतनीलत्वादिग्रहप्रतिवन्धकदोषाभावानां च चित्रप्रत्यक्षे हेतुत्वम्, अतस्त्रसरेणुचित्रस्यापि चक्षुषा ग्रह
इत्युद्भाव्यते तदा अनन्तहेतुहेतुमद्भावकल्पनागौरवाच्चित्रत्वं व्यासज्यवृत्त्येव, तत्र च समानाधिकरणनानारूपग्रहव्यङ्ग्य-
त्वमित्येव कल्प्यमानं शोभते, नह्येवं गौरवं, चित्रत्वग्रहे सामानाधिकरण्येन रूपविशिष्टरूपग्रहत्वेनैव हेतुत्वात्, उक्तहेत्व-
भावे चित्रत्वविनिर्मुक्तचित्रप्रत्यक्षस्य चोभयोस्तुल्यत्वात्, यदि च नानावयवावच्छिन्नपर्य्यायवृत्तिरेकं चित्रमप्यनुभूयते
अत एवैकावयवावच्छेदेन चित्राभावप्रतीतेरप्युपपत्तिरिति स्वीक्रियते, तदैकानेकचित्रद्रव्यस्वभावाभ्युपगमं विना न
काप्युपपत्तिः, देशस्कन्धनियतधर्म्माणां तद्ग्राहकसामग्रीग्राह्यत्वेनैवोक्तोपपत्तेर्देशस्कन्धपरिमाणविशेषग्रहेऽपीयमेव गतिरिति
दिक्। किञ्च नीलेतररूपादिषट्कस्यैव चित्ररूपे हेतुत्वमित्येतावतैव नोपपत्तिः, अवयवगतोत्कृष्टापकृष्टनीलाभ्यामपि चित्रस-
म्भवात्, ते चोत्कर्षा विचार्य्यमाणा अनन्ता एव, तदाहुः श्रीसिद्धसेनाः "पच्चुप्पणम्मि वि पज्जयम्मि भयणागइं पडइ दवं,
जं एगगुणाईआ अणंतकप्पा गुणविसेसा" (स० तृ० गा० ६) व्याख्या, प्रत्युत्पन्ने(ऽपि) वर्तमानेऽपि पर्याये भजनागतिं—भेदाभे-

१ घे. २ त्यै.

ग्रावच्छिन्नसन्निकर्ष एव ग्राहक इति वाच्यं, नीलपीतोभयद्व्यणुकारब्धत्रसरेणुनीलाप्रत्यक्षापत्तेः परमाणुसन्निकर्षस्येव परमा-
ण्ववच्छिन्नसन्निकर्षस्यापि द्रव्याग्राहकत्वेन तद्गतरूपाग्राहकत्वादितिदिक् । तदेवमेकानेकतया रूपस्य चित्रत्वं व्यवस्थापितं,
एवं वस्तुमात्र एव तदुपपादनीयम् । यथा च ग्राह्ये एकानेकतया चित्रस्वभावत्वमानुभविकं, तथा ग्राहके ज्ञानेऽपि, तत्रा-
ऽखण्डाया एकाकारतायाः सखण्डानाञ्च नानाप्रकारताविशेष्यतासांसर्गिकविषयतानां परनिरूपितानां शुद्धानां चानुलोम-
प्रतिलोमभावेन समानसंवित्संवेद्यतानियामकवैचित्र्यशालिनीनाञ्च वह्वीनामनुभवात्, अत एव "सावज्जजोगविरओ तिगुत्तो
छसु संजओ, उवउत्तो जयमाणो आया सामाइयं होइत्ति" सप्तनयात्मकमहावाक्यार्थजज्ञाने एकावशिष्टाप्रमाणाकारता
अनेकाश्चांशिक्यो नयविषयताः परस्परसंयोगजाश्चवह्व्योनुभूयन्ते । नैयायिकास्तु विशेष्ये विशेषणं तत्र च विशेषणान्तरं
१ विशिष्टस्य वैशिष्ट्यं २ एकविशिष्टेऽपरवैशिष्ट्यं ३ एकत्रद्वय ४ मित्येवं चतुर्धा विशिष्टवैशिष्ट्यबुद्धिः, तत्र मध्यमद्वये विशे-
षणविशेष्यतावच्छेदकप्रकारकनिश्चयत्वाभ्यां हेतुता, इतरद्वये तु विशेषणज्ञानासंसर्गग्रहयोर्विशेष्ये विशेषणमितिरीत्या
बुद्धित्वं, रक्तत्वाद्यवच्छिन्नप्रकारतानिरूपितदण्डत्वाद्यवच्छिन्नप्रकारताकबुद्धित्वं, तेन दण्डो रक्तो दण्डवान्पुरुष इति समू-
हालम्बने नातिप्रसङ्गः, तत्र दण्डत्वावच्छिन्नप्रकारतायाः रक्तत्वावच्छिन्नप्रकारताऽनिरूपितत्वात्, नच विशिष्टवैशिष्ट्यवि-
षयतास्वीकारे रक्तदण्डवानित्यत्र विशेष्ये विशेषणमिति विषयतायां[६] दण्डो रक्तो दण्डवान्पुरुष इति समूहालम्बनव्यावृ-
त्तायां मानाभावः, रक्तरूपदण्डत्वोभयावच्छिन्नदण्डनिष्ठप्रकारताभिन्नाया रक्तरूपत्वावच्छिन्नप्रकारतानिरूपितशुद्धदण्ड-

१ स्थे. २ णू. ३ दे. ४ ए. ५ ष्ट२. ६ यि.

एतेनाव्याप्यवृत्तिनीलादिकल्पे न ग्राहकान्तरकल्पनं, अव्याप्यवृत्तिद्रव्यसमवेतप्रत्यक्षत्वावच्छिन्नं प्रति चक्षुःसंयोगकावच्छेदकावच्छिन्नसमवायसम्बन्धावच्छिन्नाधारतासन्निकर्षेण संयोगादिप्रत्यक्षस्थले क्लृप्तेनैवानतिप्रसङ्गात्, नीलपीतोभयकपालारब्धघटीयनीले च नीलकपालिकैव परम्परयावच्छेदिकेत्यभ्युपगमादित्यादिनिरस्तं । शाखामूलोभयावच्छिन्नदीर्घतन्तुतरुसंयोगवत् नील (नीले) तरोभयाद्यवयवावच्छिन्नविलक्षणरूपस्यानुभवसिद्धत्वेन तद्ग्राहकोभयादिपर्याप्तावच्छेदकताकाधिकरणतागर्भसन्निकर्षादिकल्पनाया अप्यावश्यकत्वात्, उपदर्शितसंयोगस्थलेऽपि एकैकावच्छिन्नसंयोगद्वयस्वीकारे च तद्वृत्तिकृता सर्वैश्च नीलैरारब्धेऽवयविनि नीलात् नीलं स्वस्वावच्छेदेन समुत्पद्यमानं रूपमविरोधाद्व्यापकमेवोत्पद्यते, सजातीयविजातीयेषु नानापदार्थेषु जायमानं समूहालम्बनमिवैकं ज्ञानमिति, तत्सर्वं विलूनशीर्णं स्यात्, यश्चादर्शनमंशकार्त्स्न्याभ्यां नानैकसंयोगरूपाभ्युपगमे च जितं स्याद्वादिनैव, एतेन नानारूपवदवयवारब्धे व्याप्यवृत्तीन्येव नीलपीतादीन्युत्पद्यन्ते नीलादिकं प्रति नीलेतरादिप्रतिबन्धकत्व—नीलादिकारणत्वकल्पनापेक्षया व्याप्यवृत्तिनीलपीतादिकल्पनाया एव न्याय्यत्वात्, इत्यपि परेषां मतं निरस्तं, नीलकपालावच्छेन चक्षुःसन्निकर्षे पीताद्युपलम्भापत्तेरपि तत्र दोषत्वात्, तदाहुः सम्मतिटीकाकृतः "आश्रयव्यापित्वेप्येकावयवसहितेऽप्यवयविन्युपलभ्यमानेऽपरावयवानुपलब्धावप्यनेकरूपप्रतिपत्तिः स्यात् सर्वरूपाणामाश्रयव्यापित्वादिति" न च नीलाद्यवयवावच्छिन्नसन्निकर्षस्य नीलादिग्राहकत्वकल्पनयां न दोषः, पीतकपालिकावच्छिन्ननीलपीतोभयकपालावच्छेदेन सन्निकर्षेऽपि नीलग्रहप्रसङ्गात्, नच केवलनीलावय-

---

१ कि. २ वें. ३ कात् स्स्यापर्ण. ४ द्विनैव. ५ ना दोषः.

शालिज्ञानस्यैव स्वीकारः, नच दण्ड इत्याद्यात्मकमानसबोधासङ्ग्रहः, तत्र ज्ञानांशे दण्डस्य प्रकारत्वात्[1], न कामिन्युपनीतभा-नभावे[2] च ज्ञानाभावेऽपि तत्रागत्या लौकिकविषयताशून्यत्वं निवेशनीयं, तादात्म्येन स्वस्मिन् स्वप्रकारत्वाभ्युपगमादित्या-दिनिरस्तं, नव्यनये निर्विकल्पकसाधारणप्रत्यासत्तिस्वीकारेणोपनयकार्यतावच्छेदके लौकिकविषयताशून्यत्वस्यैव निवेशात् "घटवदित्यादौ" सर्वत्र विशेष्ये विशेषणमिति रीत्या विषयतायां प्रागस्मदुक्तबाधकस्यैव[3] साम्राज्यात्, अथैवमभावो दण्डीयो नवा इति संशयकाले दण्डाभाववदिति धीर्विशेष्ये विशेषणमिति रीत्या स्यात्, तयाऽभावे प्रतियोगितावच्छेदकविशिष्टप्रति-योगिनो बुद्धेरप्रसिद्ध्या तत्प्रतिबन्धकत्वस्याप्ययोगादिति चेत्? न, तादृशबुद्धेरप्रसिद्धत्वे दण्डाभावासंसर्गाग्रहादि[4]सामान्यसा-मग्र्या विशिष्टवैशिष्ट्यविषयिताकबोधहेतुत्वात्तादृशबुद्धेरापादकाभावात्, विशेष्ये विशेषणमिति विषयिताया विशिष्टवै-शिष्ट्यविषयिताकबोध एव हेतुत्वात्तादृशबुद्धेरापादकाभावाद्विशेष्ये विशेषणमिति विषयिताया विशिष्टवैशिष्ट्यविषयिता-व्यापकत्वे दण्डाभाववदिति ज्ञानेऽपि तस्याः सत्त्वेन तदवच्छिन्नं प्रति प्रतिबन्धकत्वसम्भवाच्च, अत एव दण्डो रक्तो न वेति संशयकाले यदि विशेष्ये विशेषणमिति रीत्यापि रक्तदण्डवानिति धियो नोत्पत्तिः, तदा तत्र दण्डो रक्त इत्यादि निश्चयाभा-ववििशिष्टो दण्डो रक्तो नवेत्यादिसंशयप्रतिबोधकः स्वीक्रियते, इत्थञ्च व्यापकत्वाद्विशेष्ये विशेषणमितिरीत्या विषयितै[5]-वानुमितिप्रवृत्त्यादिजनकतावच्छेदि[6]का विशिष्टवैशिष्ट्यबुद्धित्वं तु रक्तदण्डत्वादिविशिष्टपर्याप्तिप्रकारताकबुद्धित्वं, रक्तं दण्डेन जानामीति प्रतीतेः, इति सम्प्रदायविदः, तदसत्, अस्या एवानुमित्यादिजनकतावच्छेदकत्वे विशिष्टवैशिष्ट्यविषयतायां

---

१ त्वात. २ तभावे. ३ वनसाम्राज्याथै. ४ तावो. ५ विषतिवा. ६ कावशि.

रक्तदण्डवानित्यादिज्ञानेऽपि रक्तत्वादिप्रकारतानिरूपितदण्डादिनिष्ठविशेष्यताया एवानुभवात्,
मानस्य दूरापास्तत्वात् । रक्तदण्डवानित्यादिज्ञानेऽपि रक्तत्वादिप्रकारतानिरूपितदण्डादिनिष्ठविशेष्यताया एवानुभवात्, विशेष्ये विशे-
रक्तादेर्दण्डादिविशेष्य इत्येव प्रतीतेः, तस्माद्विशिष्टवैशिष्ट्यविषयताकबुद्धित्वमेवानुमित्यादिजनकतावच्छेदकं, विशेष्ये विशे-
षणमिति बुद्धित्वं तु विशेषणतावच्छेदकसंशयकालीनज्ञानसाधारणमेवेत्यलं संशयप्रतिबन्धकत्वेन । विशिष्टपर्य्याप्तप्रकार-
कवाक्यबुद्धित्वं विशिष्टवैशिष्ट्यबुद्धित्वमित्यपि न युक्तं, वह्निव्याप्येन्धनवानित्यादौ विशिष्टव्याप्तेरसिद्धत्वेन प्रकारत्वासं-
भवभिया परामर्शदीधितौ खण्डशो निरुक्तेरानर्थक्यापातात् । एतेन वैशिष्ट्यञ्च वैज्ञानिकं, तेन लोहितवह्निमानित्यादौ न वि-
शिष्टवैशिष्ट्यबोधानुपपत्तिरिति मथुरानाथाद्युक्तमपास्तं, विशिष्टवैशिष्ट्यविषयता विशेषणतावच्छेदकसम्बन्धभेदेन भिन्नेति सर्वैः
स्वीकारेण समवायादिघटिततदसम्भवस्य वैज्ञानिकसम्बन्धेन समाधातुमशक्यत्वाच्च, तत्तत्सम्बन्धेन विशेषणतावच्छेदकप्रका-
रकनिश्चयस्य तत्तत्सम्बन्धनिरूपितवैज्ञानिकसम्बन्धेनैव विशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नं प्रति हेतुत्वकल्पने त्वतिगौरवं, संशय-
दशायामपि शुद्धसम्बन्धेन कार्य्यापत्तिश्च, नचेष्टापत्तिः, अनुभवविरोधात्, अन्यथा विशिष्टवैशिष्ट्यं न कार्य्यतावच्छेदकमर्थस-
माजसिद्धत्वात् विशेषणज्ञानद्वयादेव तादृशबोधोपपत्तिरिति मिश्रमतसाम्राज्यापत्तेः, दण्डो रक्तो न वेति संशयानन्तरमजाय-
मानस्य दण्डो रक्त इति निश्चयानन्तरं च जायमानस्य बोधस्यानुभवसिद्धत्वादेव हि तत्रोक्तकार्य्यकारणभावेन तन्मतं
निराक्रियते, नियतसम्बन्धगर्भत्वेऽपीयमेव युक्तिरिति । इदं तु स्याद्रक्तदण्डवानित्यत्र दण्डाश्रितैव प्रकारता, तदवच्छे-
दकता च रक्ते दण्डत्वे च पर्य्याप्ता, रक्तेन दण्डत्वेन चामुमत्र जानामीति प्रतीतेः, व्यधिकरणस्याप्यवच्छेदकता-

१ वान्त. २ ल. ३ शमदाधि. ४ त्वतत्त्वा.

वच्छेदकत्वादिकं रजतमित्यादि पीतशङ्खवदित्यादिभ्रमवदविरुद्धं, सावच्छेदकता तत्तद्धर्म्मांशे समानाधिकरणव्य-
धिकरणतत्तत्सम्बन्धावच्छिन्ना, तत्तन्निरूपितबुद्धित्वं विशिष्टवैशिष्ट्यबुद्धित्वं, वह्निव्याप्येन्धनवानित्यादावपि सम्भवतीत्यलं
दीधितिकृतः खंडशो निरुक्त्या, इयमेवानुमित्यादिजनकतावच्छेदिका नानाप्रकारतादिघटितधर्म्मस्य जनकताद्यवच्छेद-
कत्वे गौरवादिति। अथ दण्डो रक्त इति निर्णयस्य रक्तत्वदण्डत्वोभयधर्म्मावच्छिन्नप्रकारताकत्वं जन्यतावच्छेदकमित्यभ्यु-
पगमेऽपि रक्तत्वधर्म्मितावच्छेदकदण्डत्वप्रकारकनिर्णयजन्ये दण्डरक्तवानिति विशिष्टवैशिष्ट्यबोधे व्यभिचार इति चेन्न,
रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताशालित्वस्यापि तादृशनिर्णयजन्यतावच्छेदके प्रवेशात्, उक्तस्थले दण्ड-
त्वप्रकारतानिरूपितरक्तत्वावच्छिन्नविशेष्यताया एव सत्त्वात्, उभयधर्म्मावच्छिन्नप्रकारतां परित्यज्योभयपर्य्याप्तप्रकारतानि-
वेशेन हेतुत्वस्वीकारे तु पर्वतो लौहित्याभाववानिति ज्ञानकाले लोहितवह्निमानिति विशिष्टवैशिष्ट्यबुध्यनापत्तिः, पर्वतो न
लोहित इति ज्ञानस्य लौहित्यप्रकारकपर्वतविशेष्यकज्ञान एव प्रतिबन्धकत्वात्, नच रक्तत्वावच्छिन्नविशेष्यताकरक्तप्रकार-
कस्य रक्तो रक्त इति स्मरणस्य प्रसङ्गस्तत्र तथा निर्णयस्य हेतुत्वादिति वाच्यं, रक्तत्वावच्छिन्नविशेष्यतायास्तत्र रक्तत्वप्रका-
रतानिरूपितत्वेऽपि रक्तत्वावच्छिन्नविशेष्यतात्वेन तस्यास्तादृशप्रकारतानिरूपितत्वानभ्युपगमात्, तेन रूपेण रक्तत्वप्रकारता-
निरूपितरक्तत्वावच्छिन्नविशेष्यताशालिज्ञानस्यैव रक्तो रक्त इत्याकारकस्मृतिजनकतया तादृशस्मरणापत्त्यसम्भवात्, दण्डो
रक्तो न वेति संशयानुव्यवसायस्तु न रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाही रक्तदण्डेन सन्देह्मीत्यप्रत्ययात्, किन्तु रक्तत्वतदभा-

१ नता. २ तस्या. ३ न्यं.

भेदः पृथिवीतरभेदवतीत्याद्याकारकद्विविधविषयताशालिन्या अनुमितेरापत्तेः, नच विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वान्नेयमापत्तिः, एवमपि प्रमेयत्वेनेतरभेदज्ञानकाले तथाविधानुमितेरापत्तिसम्भवात्, नच प्रमेयत्वादिना साध्यज्ञानकाले साध्यविशेष्यकानुमितिप्रतिवन्धकीभूतसाध्यसिद्धिसत्त्वेन[1] न तत्र तथाविधविषयताशाल्यनुमित्यापत्तिरिति वाच्यं, साध्यतावच्छेदकप्रकारकसिद्धेरेव साध्यविशेष्यकानुमितिविरोधित्वात्, अन्यथेतरभेदत्वरूपेण भेदान्तरावगाहिसिद्धिकाले तादृशानुमितिवारणाय तत्र पक्षविशेष्यतां निवेश्यसिद्धेः प्रतिवध्यप्रतिवन्धकभावान्तरापत्तेः, तस्मादितरभेदत्वप्रकारकज्ञानकालीनव्यतिरेकव्याप्तिज्ञानजन्यानुमितिविशिष्टवैशिष्ट्यविषयतास्वीकार[2] आवश्यकः, तत्साधारण्यञ्च विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकस्यावश्यकं, तथा च सति नेतरभेदत्वप्रकारकज्ञानशून्यकाले विशेष्ये विशेषणमिति रीत्येतरभेदत्वप्रकारकद्विविधविषयताशाल्यनुमित्यापत्तिः, विशिष्टवैशिष्ट्यानवगाहिन्या विशेष्ये विशेषणमिति रीत्या जायमानाया अनुमितेरप्रसिद्धेः विशिष्टवैशिष्ट्यावगाहिन्याञ्च विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुत्वादितिचेत्? एवमप्यनुमितौ स्वातन्त्र्येणैव हेतुत्वं अनुमितिसाधारणजन्यतावच्छेदकत्वे नित्यव्यावर्तनाय जन्यत्वनिवेशस्यावश्यकत्वे मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण नानाकार्यकारणभावस्यावश्यकत्वादवच्छेदकगौरवाच्चेत्याहुः । परे त्वनुभवादिकमनिवेश्यं विशिष्टवैशिष्ट्यविपयतावत्त्वमेव तदवच्छेदकं, विशेषणतावच्छेदकप्रकारकज्ञानशून्यकालीनस्मरणे ईश्वरज्ञाने च विशेष्ये विशेपणमित्येतादृशविषयतामात्रमभ्युपेयते, अतो न व्यभिचारो, न वा नित्यसाधारणमित्याहुः । केचित्तु विशेषणतावच्छेदक-

१ त्वे तत्र न विध विषयता. २ रे. ३ णा.

विशिष्टवैशिष्ट्यबोधं स्वीकृत्य विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव हेतुत्वमाहुः, तदसत्, संशयसाधारणज्ञानस्य
संशयकाले विशिष्टवैशिष्ट्यबोधं स्वीकृत्य विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव हेतुत्वमाहुः, तदसत्, संशयसाधारणज्ञानस्य
हेतुत्वेऽप्रामाण्यनिर्णयस्यैवोत्तेजकतया निर्णयत्वेन हेतुत्वे चाप्रामाण्यज्ञानस्यैव तथात्वे निर्णयत्वेन हेतुत्वकल्पनाया एवोचित-
त्वादन्यथा विशेषणतावच्छेदकप्रकारकज्ञानीयनिर्णयत्वापेक्षया गुरुशरीरस्याप्रामाण्यज्ञाननिर्णयत्वस्य निवेशने महागौरवप्र-
सङ्गात्, अथ विशेषणतावच्छेदकसंशयकाले तत्र चाप्रामाण्यशङ्कायां भवन्मत इव ममापि विशिष्टवैशिष्ट्यबोधो न जायत
इत्यप्रामाण्यज्ञानत्वावच्छिन्नाभावस्यैव निवेशे क्व दोष इति चेत्? एवमपि संशयसाधारणज्ञानस्य विशिष्टवैशिष्ट्यबोधहेतुत्वे
अनुमित्यादिकं प्रति परामर्शहेतुत्वे व्याप्याद्यंशे निर्णयत्वनिवेशे महागौरवात्, विशेषणतावच्छेदकप्रकारकनिश्चयस्य
चानाहार्य्यस्यैव हेतुत्वस्वीकारादाहार्य्यतदुत्तरोत्पन्नज्ञाने व्याप्यंशे निर्णयत्वनिवेशानावश्यकत्वात्, ननु तथापि विशेष्ये
विशेषणमिति ज्ञानसाधारण्येवातिरिक्तप्रकारिताऽस्तु तदवच्छिन्नेऽप्रामाण्यनिश्चयाभावकूटविशिष्टसंशयाभावस्य नियामक-
स्याप्रामाण्यज्ञानाभावकूटविशिष्टनिश्चयत्वावच्छिन्नतो लघुत्वात्, इयमेव योग्यता ज्ञानादिनिष्टहेतुतावच्छेदिका बाधादिप्रति-
बन्धकतावच्छेदिका च, अत एवानन्वितान्वयबुद्धेर्बाधादिप्रतिबद्धत्वप्रतिबन्धकत्वे, अत एव(च) व्याप्तिप्रकारकनिश्चयोत्तर-
मपि व्याप्यभावांशे आहार्य्यसंशयात्मकतथाविधज्ञानादनुमित्यनापत्तिः, कार्य्यसहभावेन तथाविधसंशयस्य प्रतिबन्धकत्वादि-
तिचेत्? न, अप्रामाण्यनिश्चयत्वावच्छिन्नाभावविशिष्टनिरुक्तसंशयाभावत्वेन हेतुत्वे गौरवात्, प्रतियोगितावच्छेदकप्रकारक-
निश्चयस्य प्रतियोगितावच्छेदकविशिष्टविषयकेऽभावस्य प्रत्यक्षे हेतुत्वं कल्प्यमानमभावांशाप्रवेशेन लाघवात् तादृशज्ञान एव

१ मथ. २ भ. ३ कल्प.

युक्तमिति तद्बलेन निश्चयजन्यतावच्छेदकविशिष्टवैशिष्ट्यविषयतासिद्धेश्च "शाकपाकजत्वादौ साध्यव्यापकत्वसन्देहेनाहितो हेतौ साध्यव्यापकत्वव्यभिचारसन्देह उपाधिः[१]" इति दीधित्युक्तस्तु फलीभूतसन्देहे शाकपाकजत्वविशिष्टे साध्यव्यापकस्या-विशेषणात्, अन्यथा तु द्रव्यत्वादौ तस्य निश्चयात् तत्र तद्विशेषणे तु साध्यव्यापकत्वांशे विशेष्ये विशेषणमिति रीत्या संशयाकार एव सः, रक्तो दण्डो न वेति संशयकालीनो र[२]क्तदण्डवानिति प्रात्यक्षिकबोध इव रक्तत्वांशे इति द्रष्टव्यम्। इदं तु बोध्यम्। किञ्चिद्धर्म्मावच्छिन्ने यद्विशेषणतावच्छेदकं तत्प्रकारकनिश्चयत्वेनैव हेतुत्वं अन्तरा धर्म्मितावच्छेदकानियन्त्रि-तस्थले, दण्डवदित्यादौ तु दण्डत्वादिप्रकारकज्ञानत्वेनैव निर्द्धर्म्मितावच्छेदकनिश्चयत्वस्य दुर्वचत्वात् तत्प्रवे[३]शवैयर्थ्याच्चेति, विशिष्टवैशिष्ट्यमिति बुद्धित्वं तु रक्तत्वदण्डत्वोभयधर्म्मावच्छिन्नविशेष्यतानिरूपितप्रकारताशालिबुद्धित्वं, कारणता च तत्र दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वप्रकारताशालिनिर्णयत्वेन, कार्यता च रक्तत्वविशिष्टदण्डत्वावच्छिन्नविशेष्यता-शालिज्ञानत्वेनैव, तेनैको द्वयमिति रीत्या दण्डो रक्तोऽयं मेयश्चेति ज्ञाने न व्यभिचारः, तत्र दण्डत्वविशिष्टविशेष्यताया रक्तत्वानवच्छिन्नत्वेन रक्तत्वं धर्म्मितावच्छेदकीकृत्य प्रमेयत्वादिबाधकालेऽपि तथाविधज्ञानापत्तिरिति तादृशविशेष्य-ताया रक्तत्वावच्छिन्नत्वमावश्यकमिति वाच्यं, ऐ[४]कस्या अपि प्रमेयत्वादिप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताभि-न्नाया एव रक्तत्वावच्छिन्नविशेष्यताया अभ्युपगमात्, एकस्या विशेष्यताया रक्तदण्डत्वोभयानवच्छिन्नत्वेनाव्यभिचा-रात् तत्रापि रक्तत्वधर्म्मितावच्छेदकदण्डत्वप्रकारकनिर्णयजन्ये दण्डो रक्तः प्रमेय इत्येतादृशबोधे व्यभिचारवारणाय

१ धिदि्धि. २ क्तो. ३ शे. ४ एकापि.

ताद्दशविशेष्यतायां रक्तप्रकारतादिनिरूपितदण्डत्वावच्छिन्नविशेष्यताभिन्नत्वं निवेशनीयं, एकत्रद्वयमिति विषयिता च प्रकारिताद्वयावच्छिन्नविशेष्यतारूपा यथा चैत्रो दण्डी कुण्डलीत्यत्र, नचैवमेकत्र त्रयादिकमप्यतिरिच्येत एकत्रद्वयमिति सज्ञ्ज्ञयैव सङ्ग्रहात्, एवं च दण्डी चैत्रो न कुण्डलीति ज्ञानप्रतिवध्यतावच्छेदिका दण्डप्रकारित्वकुण्डलप्रकारित्वनिरूपितचैत्रत्वावच्छिन्नविशेष्यताकनिश्चयत्वस्या[1]चैत्रो दण्डी कुण्डली दण्डी चैत्रः कुण्डलीत्युभयत्र सत्त्वात्, उद्देश्यतावच्छेदकत्वविधेयत्वयोःप्रकारताविशेषत्वात् ताद्दशवाधधीप्रतिवध्यतावच्छेदकत्वादेव चास्याश्चैत्रत्वेन शारीरद्वयं नेदं कुण्डलग्रहादेकत्र चैत्रे[2] चैत्रोऽयं दण्डी कुण्डली चेति[3] धियो विशेषोरक्तदण्डाभावधियः समूहालम्बनादिव, इयञ्चैकविशिष्टे ऽपरवैशिष्ट्यविषयताव्यापिका दण्डी कुण्डली चैत्रो द्रव्यमित्यत्रैव दण्डी कुण्डली चैत्र इत्यत्रापि सत्त्वात्, तत्प्रयोजकसामग्री व्यापकसामग्रीव्यापकत्वाच्चेति यदन्ति, तदसत्, सामान्यविशेषापेक्षयैकानेकात्मकवस्त्वनभ्युपगमे एकान्तवादस्य कुत्राप्यघटमानत्वात्, विशिष्टवुद्धिष्वपि हि सामान्यत एकाविशेषितस्या[4]परस्य निरूपितत्वेन वहुतरापि विषयता अनुभूयन्त इति चतुर्द्धैवेति को विभागः, अत एवैकत्र द्वयस्थलेऽप्येकत्र भासनयोर्विशेषणयोः परस्परमपि सामानाधिकरण्येन वैशिष्ट्यभानाद्विषयताभेदः, यदि च तत्र प्रकारतयोर्निरूपितत्वविशेषान्नातिरेकस्तदा विशिष्टवैशिष्ट्यस्थलेऽप्येकप्रकारतावच्छिन्नापरप्रकारतयोपपत्तावतिरेके किं मानं, विशेष्ये विशेषणमिति स्थले हि रक्तत्वप्रकारतानिरूपिता दण्डत्वावच्छिन्नप्रकारता, विशिष्टवैशिष्ट्यस्थले च रक्तत्वप्रकारतावच्छिन्ना दण्डत्वावछिन्नप्रकारतेत्येवं विशे[5]षसम्भवात्, स्वीक्रियतां वा तत्रावच्छेदकत्वाख्येष्वेव प्रकारता, प्रका-

१ द्वय च. २ त्रचैत्रोद. ३ ति विधि. ४ श्च. ५ पण.

पर्य्याप्तितदन्यसम्बन्धाभ्यां समुद्रत्वतदभाववत्तया प्रमाणाप्रमाणोभयवैलक्षण्यं, अन्यत्र तु
"न समुद्र इति" स्पष्टः
तज्जातीयतयेति फलितार्थः ॥ ९ ॥
स्वार्थनिश्चायकत्वरूपं (प)नयप्रामाण्यसंशयेन विषयसंशयात् निश्चयस्यानिश्चयपरिणत्या न कथञ्चिदित्यत्रापि नयानामने-
कान्त एवेति शिक्षयति—

**स्वार्थे सत्या परैर्नूना असत्या निखिलानयाः । विदुषां तत्र नैकान्त इति दृष्टं हि सम्मतौ ॥ १० ॥**

"स्वार्थ इति" स्वार्थे—स्वविषये, सत्याः—निश्चायकाः, परैः—नयैः, नूना—अप्रामाण्याः शङ्काविषयीकृता, असत्याः—अनिश्चा-
यकाः, निखिलानयाः—नैगमादयः, विदुषां—सिद्धान्तव्युत्पन्नानां, तत्र—नयप्रामाण्याप्रामाण्ययोः, नैकान्तःवक्तुं युक्त इति
शेषः, इति दृष्टं—परीक्षितं, हि सम्मतौ, अभियुक्तवचनसंवादप्रदर्शनं एतत्, तद्वचनं च—"णिययवयणिज्जसच्चा, सव्वणया
परविआलणे मोहा । ते पुण निदिट्ठसमठ्ठ, विभयइ सच्चे व अलीए वेत्ति" ( स० प्र० गा० २८ ) ॥ १० ॥
ननु नयग्रन्थे सम्मत्यादौ बौद्धादिदर्शनपरिग्रहेण नैयायिकादिदर्शनखण्डनं श्रूयते, तत्र दुर्नयपरिग्रहे कथं न मिथ्या-
त्वैकान्त इत्याशङ्क्याह—

**बौद्धादिदृष्टयोऽप्यत्र वस्तुस्पर्शेन नाप्रमाः । उद्देश्यसाधने रत्नप्रभायां रत्नबुद्धिवत् ॥ ११ ॥**

"बौद्धादीति" अत्र नयग्रन्थे, उद्देश्यं यदभिनिविष्टेतरनयखण्डनं तत्साधने तत्साधननिमित्तं, बौद्धादिदृष्टयोऽपि—बौद्धा-
दिनयपरिग्रहा अपि, वस्तुस्पर्शेन—शुद्धपर्य्यायादिवस्तुप्राप्त्या, नाप्रमाः—फलतो न मिथ्यारूपा इत्यर्थः, किंवत् ? रत्नप्रभायां

रत्नबुद्धिवत्–यथा हि तत्रारत्ने रत्नावगाहितया स्वरूपतो न प्रामाण्यं अदूरविप्रकर्षात्तु वस्तुप्रापकतया फलतः प्रामाण्यं तथा दुर्नयान्तरच्छेदाय दुर्नयान्तरपरिग्रहेऽपीति न कश्चिद्दोषः ॥ ११ ॥

एवं सामान्यलक्षणं विविच्य तद्विभागमाह—

**अयं संक्षेपतो द्रव्यपर्य्यायार्थतया द्विधा । द्रव्यार्थिकमते द्रव्यं तत्त्वं नेष्टमतः परम् ॥ १२ ॥**

"अयमिति" अयम्–सामान्यलक्षणलक्षितो नयः, सङ्क्षेपतः–अवान्तरभेदापरिग्रहेण, द्रव्यपर्य्यायतया द्रव्यार्थिकः पर्य्यायार्थिकश्चेति द्विधा–द्विप्रकारः, तीर्थकरवचनसङ्ग्रहविशेषप्रस्तारमूलत्वेनेत्थमेव मूलनयविभजनात्, तदाह वादी "तित्थयरवयणसंगहविसेसपत्थारमूलवागरणी । दव्वट्ठिओ अपज्जवणओ अ सेसा विगप्पासिंति" ( स० प्र० गा० ३ ) तत्रादौ द्रव्यार्थिकमतमाह द्रव्यार्थिकस्य मते द्रव्यं तत्त्वं परमार्थसत्, अतः द्रव्यात्पृथग्भिन्नं विकल्पसिद्धं गुणपर्यायस्वरूपं तत्त्वं नेष्टं, संवृतिसतोऽपि तस्य परमार्थतोऽसत्त्वादिति भावः ॥ १२ ॥

एतदेवाह—

**तिर्यगूर्द्धप्रचयिनः पर्याया खलु कल्पिताः । सत्यं तेष्वन्वयि द्रव्यं कुण्डलादिषु हेमवत् ॥ १३ ॥**

"तिर्यगिति" तिर्यक्प्रचयिनः परस्परसमानाधिकरणत्वे सति परस्परसमानकालीना रूपरसादयः अणुत्वस्थूलत्वादयश्च, उर्द्ध्वप्रचयिनः परस्परसमानाधिकरणत्वे सति परस्परभिन्नकालीना रक्तश्यामादयः संयोगविभागादयश्च पर्य्यायाः, खलु-

१ मत्वाद.

ङ्ग्रहेण चाभावविशेषेण तथात्वे बाधकाभावात्, व्यवहारोच्छेदस्य व्यवहारनयसिद्धकार्य्यकारणभावेनैव निराकरणादनुभवसिद्धास्तु ग्राह्यग्राहकनिष्ठाः सामान्यविशेषधर्म्मा न कल्पनामात्रेणापोहितुं शक्या इति दिक्। उत्तिष्ठन्तु विकल्पवीचिनिचयाः पर्यायमर्य्यादया, द्रव्यार्थाहिते ( द्रव्यार्थाधिगमे ) तु चेतसि चिरं शाम्यंतु तत्रैव ते । वस्तुप्रस्तुतमस्तु सागरसमं सर्वोपपत्तिक्षमं व्राह्यं वा स्फुटमान्तरं समुचितस्याद्वादमुद्राङ्कितम् ॥ १ ॥ ईहापायपरम्परापरिचयः सर्वोप्ययं युज्यते, वस्त्वंशेप्युपयोगमाकलयतामन्तर्मुहूर्तावधिं । अन्येषां तु विकल्पशिल्पघटितो बोधस्तृतीयं क्षण–ध्वंसी ध्वस्तसमस्तहेत्वमिलितः कस्मिन् विचारे क्षमः ॥ २ ॥ तदेवमेकानेकरूपा नयप्रमाणप्रतिपत्तयः प्रामाणिक्य इति स्थितम् ॥ ७ ॥

अथेदं नयज्ञानं प्रमाप्रमयोः कुत्रान्तर्भवतीत्याशङ्क्य तदुभयविलक्षणमेवेति निश्चिनोति—

**अयं न संशयः कोटेरैक्यान्नच समुच्चयः । न विभ्रमो यथार्थत्वादपूर्णत्वाच्च न प्रमा ॥ ८ ॥**

“अयमिति” अयं–नयात्मको बोधः, संशयो न, कुतः कोटेः–प्रकारस्यैक्यात्, संशयस्य चैकत्र विरुद्धोभयप्रकारकज्ञानस्वरूपत्वात्, अत एव समुच्चयोऽपि न, चोऽप्यर्थः, तस्य एकत्राविरुद्धोभयधर्म्मप्रकारकज्ञानस्वरूपत्वात्, संशये प्रकारताद्वयनिरूपिता एका विशेष्यता समुच्चये तु विशेष्यताभेद इत्यन्ये, तदपि भेदाभेदवादे कथञ्चित्सङ्गच्छते, नैकान्तवादे, विषये तद्वति तत्प्रकारकत्वनिरपेक्षविशेष्यताभेदेऽभ्युपगम्यमाने साकारवादप्रसङ्गात्, यथार्थत्वात्–विभ्रमो न, अवगाहते हि द्रव्यार्थिकादिरस्तित्वादिमति कथञ्चिदस्तित्वादिकं, अपूर्णत्वात्–सप्तभङ्गपरिकरितवस्त्ववगाहितात्पर्य्याभाववत्त्वाच्च

प्रमा ने–अनेनालौकिकप्रामाण्याभाव आवेदितः, लौकिकं तु प्रामाण्यं तद्वति तत्प्रकारकत्वरूपं न वाधितमिति न व्यवहारविरोधः, विचारोपयिकं चा(च)प्रामाण्यं प्रस्तुतं न प्रवृत्तिमात्रोपयिकमिति नयज्ञानस्य न पूर्णप्रमात्वमत उक्तचतुष्टयविलक्षणमेवेदं नयज्ञानमनुभवसिद्धमभ्युपगन्तव्यं, न चेदं स्वमनीषिकाविजृम्भितं, यत उक्तं तत्त्वार्थभाष्ये "तथाप्येते तन्त्रान्तरीयाः स्वतन्त्रा वा चोदकपक्षग्राहिणो मतिभेदेन विप्रधाविता" उभयथापि मिथ्यात्वमिति चेत् ? न, प्रमाणापेक्षात्वेनैतेषामुभयवैलक्षण्यादिति*, अत एव संयोगेऽपि नैतेषां विप्रतिपत्तित्वं, सत्त्वजीवाजीवात्मकत्वद्रव्यगुणपर्य्यायात्मकत्वचतुर्दर्शनविषयत्वपञ्चास्तिकायावरुद्धत्वषड्द्रव्यकोडीकृतत्वधर्म्मैरेकत्वद्वित्वत्रित्वचतुष्ट्वपञ्चत्वषड्त्वाध्यवसायानामिव पर्य्यायविशुद्धिवशात्पृथगर्थग्राहिणां मतिज्ञानादीनामिवैकत्रार्थे प्रतिनियतविषयविभागशालिनां प्रत्यक्षादीनामिव वा नैगमाद्यध्यवसायानामविरुद्धनानाधर्म्मग्राहित्वेनाविप्रतिपत्तिरूपत्वादिति सम्प्रदायः, अत्र त्रिभिर्निदर्शनैर्विरुद्धधर्म्मग्राहित्वांशग्राहित्वपरस्परफलवैलक्षण्यानां विप्रतिपत्तित्वसाधकहेतूनामसिद्धिव्यभिचारप्रदर्शनादिष्टसिद्धिरित्यस्मदीयो विवेकः ॥ ८ ॥

उक्तमेवार्थं लौकिकदृष्टान्तेन समर्थयति—

**न समुद्रोऽसमुद्रो वा समुद्रांशो यथोच्यते । नाप्रमाणं प्रमाणं वा प्रमाणांशस्तथा नयः ॥ ९ ॥**

---

१ नोनोनालौ. २ पंवा. ३ श. ४ णा. ५ द्वा. ६ क्ष्यं. * "स्वविषयप्राधान्यरूपस्वतन्त्रतायाश्च मिथ्यात्वाप्रयोजकत्वात् गोणत्वमुख्यत्वयोर्ह्रस्वदीर्घत्वयोरिवापेक्षिकवस्तुधर्मत्वात्" इत्यधिकं नयरहस्ये.

"न समुद्र इति" स्पष्टः पर्य्याप्तितदन्यसम्बन्धाभ्यां समुद्रत्वतदभाववत्तया प्रमाणाप्रमाणोभयवैलक्षण्यं, अन्यत्र तु तज्जातीयतयेति फलितार्थः ॥ ९ ॥

स्वार्थनिश्चायकत्वरूपं (प)नयप्रामाण्यसंशयेन विषयसंशयात् निश्चयस्यानिश्चयपरिणत्या न कथञ्चिदित्यत्रापि नयानामनेकान्त एवेति शिक्षयति—

**स्वार्थे सत्या परैर्नूना असत्या निखिलानयाः । विदुषां तत्र नैकान्त इति दृष्टं हि सम्मतौ ॥ १० ॥**

"स्वार्थ इति" स्वार्थे—स्वविषये, सत्याः—निश्चायकाः, परैः—नयैः, नूना—अप्रामाण्याः शङ्काविषयीकृता, असत्याः—अनिश्चायकाः, निखिलानयाः—नैगमादयः, विदुषां—सिद्धान्तव्युत्पन्नानां, तत्र—नयप्रामाण्याप्रामाण्ययोः, नैकान्तःवक्तुं युक्त इति शेषः, इति दृष्टं—परीक्षितं, हि सम्मतौ, अभियुक्तवचनसंवादप्रदर्शनं एतत्, तद्वचनं च—"णिययवयणिज्जसच्चा, सव्वणया परविआलणे मोहा । ते पुण निदिट्ठसमठ्ठ, विभयइ सच्चे व अलीए वेत्ति" ( स० प्र० गा० २८ ) ॥ १० ॥

ननु नयग्रन्थे सम्मत्यादौ बौद्धादिदर्शनपरिग्रहेण नैयायिकादिदर्शनखण्डनं श्रूयते, तत्र दुर्नयपरिग्रहे कथं न मिथ्यात्वैकान्त इत्याशङ्क्याह—

**बौद्धादिदृष्टयोऽप्यत्र वस्तुस्पर्शेन नाप्रमाः । उद्देश्यसाधने रत्नप्रभायां रत्नबुद्धिवत् ॥ ११ ॥**

"बौद्धादीति" अत्र नयग्रन्थे, उद्देश्यं यदभिनिविष्टेतरनयखण्डनं तत्साधने तत्साधननिमित्तं, बौद्धादिदृष्टयोऽपि—बौद्धादिनयपरिग्रहा अपि, वस्तुस्पर्शेन—शुद्धपर्य्यायादिवस्तुप्राप्त्या, नाप्रमाः—फलतो न मिथ्यारूपा इत्यर्थः, किंवत् ? रत्नप्रभायां

रत्नबुद्धिवत्–यथा हि तत्रारत्ने रत्नावगाहितया स्वरूपतो न प्रामाण्यं अदूरविप्रकर्षात्तु वस्तुप्रापकतया फलतः प्रामाण्यं तथा दुर्नयान्तरच्छेदाय दुर्नयान्तरपरिग्रहेऽपीति न कश्चिद्दोषः ॥ ११ ॥

एवं सामान्यलक्षणं विविच्य तद्विभागमाह—

**अयं संक्षेपतो द्रव्यपर्य्यायार्थतया द्विधा । द्रव्यार्थिकमते द्रव्यं तत्त्वं नेष्टमतः परम् ॥ १२ ॥**

"अयमिति" अयम्–सामान्यलक्षणलक्षितो नयः, सङ्क्षेपतः–अवान्तरभेदापरिग्रहेण, द्रव्यपर्य्यायतया द्रव्यार्थिकः पर्य्यायार्थिकश्चेति द्विधा–द्विप्रकारः, तीर्थकरवचनसङ्ग्रहविशेषप्रस्तारमूलत्वेनेत्थमेव मूलनयविभजनात्, तदाह वादी "तित्थयरवयणसंगहविसेसपत्थारमूलवागरणी । दव्वट्ठिओ अपज्जवणओ अ सेसा विगप्पासिंति" ( स० प्र० गा० ३ ) तत्रादौ द्रव्यार्थिकमतमाह द्रव्यार्थिकस्य मते द्रव्यं तत्त्वं परमार्थसत्, अतः द्रव्यात्पृथग्भिन्नं विकल्पसिद्धं गुणपर्यायस्वरूपं तत्त्वं नेष्टं, संवृतिसतोऽपि तस्य परमार्थतोऽसत्त्वादिति भावः ॥ १२ ॥

एतदेवाह—

**तिर्यगूर्द्धप्रचयिनः पर्याया खलु कल्पिताः । सत्यं तेष्वन्वयि द्रव्यं कुण्डलादिषु हेमवत् ॥ १३ ॥**

"तिर्यगिति" तिर्यक्प्रचयिनः परस्परसमानाधिकरणत्वे सति परस्परसमानकालीना रूपरसादयः अणुत्वस्थूलत्वादयश्च, उर्द्ध्वप्रचयिनः परस्परसमानाधिकरणत्वे सति परस्परभिन्नकालीना रक्तश्यामादयः संयोगविभागादयश्च पर्य्यायाः, खलु-

---

१ मत्वाद.

नयज्ञानं प्रमाप्रमयोः कुत्रान्तर्भावः

"न समुद्र इति" स्पष्टः पर्य्याप्तितदन्यसम्बन्धाभ्यां समुद्रत्वतदभाववत्तया प्रमाणाप्रमाणोभयवैलक्षण्यं, अन्यत्र तु तज्जातीयतयेति फलितार्थः ॥ ९ ॥

स्वार्थनिश्चायकत्वरूपं (प)नयप्रामाण्यसंशयेन विषयसंशयात् निश्चयस्यानिश्चयपरिणत्या न कथञ्चिदित्यत्रापि नयानामनेकान्त एवेति शिक्षयति—

**स्वार्थे सत्या परैर्नूना असत्या निखिलानयाः । विदुषां तत्र नैकान्त इति दृष्टं हि सम्मतौ ॥ १० ॥**

"स्वार्थ इति" स्वार्थे—स्वविषये, सत्याः—निश्चायकाः, परैः—नयैः, नूना—अप्रामाण्याः शङ्काविषयीकृता, असत्याः—अनिश्चायकाः, निखिलानयाः—नैगमादयः, विदुषां—सिद्धान्तव्युत्पन्नानां, तत्र—नयप्रामाण्याप्रामाण्ययोः, नैकान्तःवक्तुं युक्त इति शेषः, इति दृष्टं—परीक्षितं, हि सम्मतौ, अभियुक्तवचनसंवादप्रदर्शनं एतत्, तद्वचनं च—"णिययवयणिज्जसच्चा, सव्वणया परविआलणे मोहा । ते पुण निदिट्ठसमठ्ठ, विभयइ सच्चे व अलीए वेत्ति" ( स० प्र० गा० २८ ) ॥ १० ॥

ननु नयग्रन्थे सम्मत्यादौ बौद्धादिदर्शनपरिग्रहेण नैयायिकादिदर्शनखण्डनं श्रूयते, तत्र दुर्नयपरिग्रहे कथं न मिथ्यात्वैकान्त इत्याशङ्क्याह—

**बौद्धादिदृष्टयोऽप्यत्र वस्तुस्पर्शेन नाप्रमाः । उद्देश्यसाधने रत्नप्रभायां रत्नबुद्धिवत् ॥ ११ ॥**

"बौद्धादीति" अत्र नयग्रन्थे, उद्देश्यं यदभिनिविष्टेतरनयखण्डनं तत्साधने तत्साधननिमित्तं, बौद्धादिदृष्टयोऽपि—बौद्धादिनयपरिग्रहा अपि, वस्तुस्पर्शेन—शुद्धपर्य्यायादिवस्तुप्राप्त्या, नाप्रमाः—फलतो न मिथ्यारूपा इत्यर्थः, किंवत् ? रत्नप्रभायां

रत्नबुद्धिवत्-यथा हि तत्रारत्ने रत्नावगाहितया स्वरूपतो न प्रामाण्यं अदूरविप्रकर्षात्तु वस्तुप्रापकतया फलतः प्रामाण्यं तथा दुर्नयान्तरच्छेदाय दुर्नयान्तरपरिग्रहेऽपीति न कश्चिद्दोषः ॥ ११ ॥

एवं सामान्यलक्षणं विविच्य तद्विभागमाह—

**अयं संक्षेपतो द्रव्यपर्य्यायार्थतया द्विधा । द्रव्यार्थिकमते द्रव्यं तत्त्वं नेष्टमतः परम् ॥ १२ ॥**

"अयमिति" अयम्—सामान्यलक्षणलक्षितो नयः, सङ्क्षेपतः—अवान्तरभेदापरिग्रहेण, द्रव्यपर्य्यायतया द्रव्यार्थिकः पर्य्यायार्थिकश्चेति द्विधा—द्विप्रकारः, तीर्थकरवचनसङ्ग्रहविशेषप्रस्तारमूलत्वेनेत्थमेव मूलनयविभजनात्, तदाह वादी "तित्थयरवयणसंगहविसेसपत्थारमूलवागरणी । दव्वट्ठिओ अपज्जवणओ अ सेसा विगप्पासिंति" ( स० प्र० गा० ३ ) तत्रादौ द्रव्यार्थिकमतमाह द्रव्यार्थिकस्य मते द्रव्यं तत्त्वं परमार्थसत्, अतः द्रव्यात्पृथग्भिन्नं विकल्पसिद्धं गुणपर्यायस्वरूपं तत्त्वं नेष्टं, संवृतिसतोऽपि तस्य परमार्थतोऽसत्त्वादिति भावः ॥ १२ ॥

एतदेवाह—

**तिर्यगूर्द्ध्वप्रचयिनः पर्याया खलु कल्पिताः । सत्यं तेष्वन्वयि द्रव्यं कुण्डलादिषु हेमवत् ॥ १३ ॥**

"तिर्यगिति" तिर्यक्प्रचयिनः परस्परसमानाधिकरणत्वे सति परस्परसमानकालीना रूपरसादयः अणुत्वस्थूलत्वादयश्च, ऊर्द्ध्वप्रचयिनः परस्परसमानाधिकरणत्वे सति परस्परभिन्नकालीना रक्तश्यामादयः संयोगविभागादयश्च पर्य्यायाः, खलु-

---

१ मत्वाद.

निश्चितं,कल्पिताः—वासनाविशेषप्रभवविकल्पसिद्धाः,अपारमार्थिका इति यावत् ,तेषु—कल्पनारूढेषु पर्य्यायेषु,अन्वयि-व्याप-
कतया प्रतीयमानं, द्रव्यं—सत्यं, कुण्डलादिषु नानाकाञ्चनपर्यायेष्वन्वीयमानहेमवत्, अयं भावः—यथा शुक्तौ रजतभ्रान्तौ
बाधावतारानन्तरं रजताभावभाने ऽपि तत्र शुक्तेर्भासमानत्वात् शुक्तेः सत्यत्वं रजतस्य चासत्यत्वं तथा कुण्डलाद्यभावभाने
ऽपि हेम्नो भानात् कुण्डलादिपर्य्यायाणामसत्यत्वं हेमद्रव्यस्य च सत्यत्वं, एवमन्यत्रापि भावनीयमिति । नन्वेवं भ्रमा-
धिष्ठानत्वमेव सत्यत्वं भ्रमविषयत्वं चासत्यत्वमित्यागतं, अत्र चासत्यत्वं प्रत्यक्षप्रतीयमानेषु पर्य्यायेष्वव्यापकं, एवं तत्र तद-
सत्त्वरूपसत्यत्वमपि तेष्वव्यापकमिति चेत् ? न, सत्यरजतस्यापि प्रतिभासकाले सत्ताभानेन कालत्रयसत एवैतन्नये
सत्यत्वस्वीकारात्, अत एव कालवृत्त्यत्यन्ताभावाप्रतियोगित्वमेव परमार्थसत्यत्वमित्यभिप्रेत्याहैतत्साम्प्रदायिकः ॥ १३ ॥

**आदावन्ते च यन्नास्ति मध्येऽपि हि न तत्तथा । वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ १४ ॥**

"आदाविति" आदावन्ते च यत्—वस्तु, नास्ति तत्—मध्येऽपि—मध्यमकालेऽपि, न तथा—नास्तीत्यर्थः, न हि प्रागभाव-
ध्वंसानवच्छिन्नकालसम्बन्धः सत्तेत्यभ्युपगन्तुं शक्यं, उत्पत्तिविनश्यतासमययोः उत्पत्तिविनाशव्यापारव्यग्रयोरन्वयिव्य-
वहारात्, नच तद्विवेके मध्यभागः कश्चिदवशिष्यते इक्षुदण्डस्येव सकलमूलाग्रभागच्छेदे । किञ्च पूर्वं पश्चाच्चासत्स्व-
भावस्य कथं मध्यमक्षणे सत्स्वभावत्वं स्वभावविरोधात्, मध्यक्षणे सन्नेव पर्यायः पूर्वापरकालयोरसद्व्यवहारकारीति न
स्वभावविरोधं इति चेत् ? तर्हि पूर्वापरकालयोरसत्स्वभाव एवायं मध्ययक्षणसम्बन्धेन सद्व्यवहारकारीत्येव किन्न स्वीक्रियते,

१ तशु. २ नचा. ३ "सत्तयिव" इत्यपि कुत्रचित्. ४ धा.

तस्माच्च निरपेक्षपारमार्थिकसत्तावन्तः पर्यायाः, किन्तु वितथैः शशविषाणादिभिः कालपनिकत्वेन सदृशाः सन्तः अनादि-लौकिकव्यवहारवासनात् अवितथा इव लक्षिता लोकैरिति शेषः ॥ १४ ॥

नन्वेवं द्रव्यार्थिकनये पर्यायाणां शशविषाणप्रायत्वात्तदवगाहिज्ञानमलीकविषयत्वेन मिथ्या स्यात्, नच घटादिज्ञान-विनिर्मुक्तविषयको द्रव्योपयोगः कश्चिदवशिष्यते इति नामशेषतैव तस्य स्यादित्याशङ्क्य शुद्धावान्तरद्रव्यार्थिकभेदेन तस्य द्वैविध्यात् नानुपपत्तिरित्यभिप्रायवानाह—

**अयं द्रव्योपयोगः स्याद्विकल्पेऽन्त्ये व्यवस्थितः । अन्तरा द्रव्यपर्य्यायाधीः सामान्यविशेषवत् ॥ १५ ॥**

"अयमिति" अयं द्रव्योपयोगः—द्रव्यार्थिकनयजन्यो बोधः, अन्त्ये विकल्पे—शुद्धसङ्ग्रहाख्ये, व्यवस्थितः—पर्य्यायबुद्ध्या-ऽविचलितः स्यात्, अन्तरा—शुद्धसङ्ग्रहशुद्धर्जुसूत्रविषयमध्ये द्रव्यपर्य्यायधीरेव स्यात्, सामान्यविशेषबुद्धिवत् यथा हि परेषां द्रव्यत्वादिकं द्रव्याद्यपेक्षया सामान्यं सद्गुणाद्यपेक्षया विशेषाख्यां लभते तथास्माकं घटादिकं स्वपर्यायापेक्षया सामान्यं सत् गुणाद्यपेक्षया पर्यायाख्यां लभते इति घटाद्यवगाही अवान्तरद्रव्यार्थिकः पर्यायोपसर्जनतां द्रव्यमुख्यतां चावगाहमानो न विरुध्यते, असतोऽप्युपसर्जनतयाश्रयणं च कर्णशष्कुल्यवच्छिन्नाकाशस्य शब्दग्राहकतां वदतां तार्किकाणां आनुपूर्वीविशेषविशिष्टस्य शब्दस्य श्रोत्रग्राह्यतां वदतां मीमांसकादीनां च दृश्यत एवेति भावः। यद्वा घटादेर्द्रव्यार्थिकेन पर्यायविनिर्मुक्तद्रव्याकारेणैव ग्रहः, पर्यायनयेन तत्र पर्य्यायत्वापादने च पर्यायविशिष्टतया ग्रहणमित्येवं सूक्ष्मेक्षिकायां शुद्धसङ्ग्रहात् अन्त्यविशेषं यावत् अव्यवस्थितिः, अन्त्यविशेषविकल्पे च शुद्धर्जुसूत्रलक्षणे कारणाभावादेव द्रव्योपयोगो

व्यवस्थितः स्यात्—व्युपरतः स्यादिति व्याख्येयं, नचानया व्यवस्थयैवैकस्यापि बोधस्यानापत्तिः तत्तदवान्तरभेदप्रवृत्तौ वा विषयान्तरसञ्चारानुपपत्तिः, पर्य्यायान्तरजिज्ञासोपरमे तद्बोधविश्रान्तेः इति विभावनीयं, तदिदमुक्तं सम्मतौ "पज्जवणयवुकंतं वत्थुं दवट्ठिअस्स वयणिज्जं। जाव दविओवओगो अपच्छिमविअप्पणिवयणोत्ति" ( स० प्र० गा० ८ ) व्याख्या—न विद्यते पश्चिमे विकल्पनिर्वचने सविकल्पधीर्व्यवहारलक्षणो यत्र स तथा, सङ्ग्रहावसान इति यावत्, ततः परं विकल्पवचनाप्रवृत्तेः, ईदृशो यावद्द्रव्योपयोगो प्रवर्तते तावद्द्रव्यार्थिकस्य वचनीयं वस्तु, तच्च पर्य्यायनयेन वि-विशेषेण, उत्—ऊर्द्ध, क्रान्तमेव विषयीकृतमेव, पर्य्यायानाक्रान्तसत्तायां मानाभावादित्येकोऽर्थः। यद्वा यद्वस्तु सूक्ष्मतरसूक्ष्मतमादिबुद्धिना पर्य्यायनयेन स्थूलरूपं त्यजता (उत्तरत्र सूक्ष्मरूपाश्रयणात्) व्युत्क्रान्तं गृहीत्वेदमुक्तं यथा किमिदं मृत्सामान्यं यत् घटादिविशेषानुपरक्ताविषयीभवेदित्येवमाकारेण यावच्छुक्लरूपतमोऽन्त्यो विशेषस्तावत्तत्सर्वं द्रव्यार्थिकस्य वचनीयता यावदपश्चिमविकल्पनिर्वचनो योऽन्त्यः विशेषस्तावद्द्रव्योपयोगः प्रवर्तत इति द्वितीयोऽर्थः। अत एव द्रव्यपर्य्यायविषयतया तदितराविषयतया वा न शुद्धजातीयद्रव्यार्थिकपर्य्यायार्थिकव्यवस्था, किन्तूपसर्जनीकृतानर्थप्रधानीकृतस्वार्थविषयतया, तदुक्तं—दवट्ठिओत्ति तम्हा णत्थि णओ नियमसुद्धजाईओ। ण य पज्जवट्ठिओ णाम कोइ भयणा य उ विसेसोत्ति" ( स० प्र० गा० ९ ) भजनोपसर्जप्रधानभावावगाहना, आह सामान्यसङ्ग्रहेऽपि शुद्धद्रव्यार्थैकान्तिको न स्यादिति चेत्? न, स्यादेव पर्य्यायनयविचारानवतारदशायामेव तस्य शुद्धत्वव्यवस्थितेः, तदवतारे तु पूर्वप्रवृत्तद्रव्यार्थिकाप्रामाण्यनिश्चयेन तदर्थाभावस्यैव निश्चयात्, तदुक्तं

१ त्वा मुक्तं इति मूले "त्वेत्युक्तं" सम्यतिवृत्तौ. २ दे.

“दव्वट्ठिअवत्तव्वं अवत्थु नियमेण होइ पज्जाए। तह पज्जववत्थु अवत्थुमेव दव्वट्ठिअनयस्स” ( स० प्र० गा० १० ) अवस्तु इतरनयप्राधान्योपस्थितिजनितनयाप्रामाण्यनिश्चयकृताऽवस्तुत्वनिश्चयविषयः, तस्मात्पर्य्यायविनिर्मुक्तप्रकारताकस्य पर्य्यायनिष्ठोपसर्जनत्वाख्यविषयताकस्य वा द्रव्यार्थिकस्य तत्तत्तर्कोपनीतस्वार्थविचारदशायामेव शुद्धत्वं, पर्य्यायनयार्थान्तरभावाकाङ्क्षायां चाशुद्धत्वमिति विवेकः ॥ १५ ॥ पर्य्यायार्थिकमतमुपन्यस्यति—

**पर्य्यायार्थमते द्रव्यं पर्य्यायेभ्योऽस्ति नो पृथक्। यत्तैरर्थक्रिया दृष्टा नित्यं कुत्रोपयुज्यते ॥ १६ ॥**

“पर्य्यायार्थमत इति” पर्य्यायार्थमते द्रव्यं—द्रव्यपदार्थः सदृशक्षणसन्ततिरेव नतु पर्यायेभ्यः पृथगस्ति यत्—यस्मात्कारणात्, तैः—पर्य्यायैः, अर्थक्रिया—जलाहरणादिरूपा दृष्टा, नित्यमप्रच्युतानुत्पन्नस्थिरैकस्वभावं वस्तु कुत्रोपयुज्यते न कुत्रचिदित्यर्थः, अयं भावः—सत्त्वं तावदन्यैर्यत्किञ्चित्परिभाष्यतामस्मन्मते तु भावानां प्रत्यक्षसिद्धमर्थक्रियाकारित्वमेव तत्, तच्च क्रमयौगपद्याभ्यां व्याप्तं, नहि क्रमाक्रमाभ्यामन्यः प्रकारः शङ्कितुमपि शक्यते, व्याघातस्योद्भवात्, न क्रमः इति निषेधादेवाक्रमस्य, नाक्रम इति निषेधादेव च क्रमस्योपगमात्, अभ्युपगमश्च प्रतिक्षेपं व्याहन्तीति क्रमाक्रमौ स्थिरेऽसम्भवन्तौ अर्थक्रियामपि ततो व्यावर्तयतः। न च क्रमो नानाकालीनकार्यजनकत्वं स्वकार्यप्रागभावसमानकालीनकार्य्यजनकत्वं वा अक्रमश्चैकदा यावत्स्वकार्यजनकत्वमिति कारितागर्भत्वेन व्यावर्त्यव्यावर्तकयोरविशेषः, कारिताद्वयव्यावृत्त्या तत्सामान्यव्यावृत्त्यापादाने तात्पर्य्यात्, समर्थो हि भावो वर्तमानार्थक्रियाकरणकालेऽतीतानागतेऽर्थक्रिये कुर्यादेव,

यत्काले यत् करणसमर्थं तत्काले तदुत्पादकत्वमिति व्याप्तेः, असमर्थत्वे तु पूर्वापरकालयोरप्यकरणापत्तिः, समर्थो-
प्यपेक्षणीयासन्निधेर्न करोतीति चेत्? कथं सहकारिणामपेक्षा? किं तैः सह करोतीत्यन्वयपर्य्यवसितः स्वभाव(वा)भेदः १
उत तैर्विना न करोतीति व्यतिरेकिनिष्ठं स्वरूपं २ आहोस्वित्तैरुपकृतः करोतीत्युपकारभेदः ३? न प्रथमः, सहकार्य्य-
भावकालेऽपि स्वभावस्य तादवस्थ्यात्तदा तत्कार्य्यकरणापत्तेः, तत्स्वभावतादवस्थ्य एव तैः सहैव करोतीति स्वभावहानि-
भिया तदा न कार्यं करोतीति चेत्? स तर्हि स्वभावाभेदः सहकारिसाहित्ये सति कार्य्यकरणनियतः सहकारिणो न
जह्यात्, प्रत्युत स्वगल एव बध्नीयात्, अत एव न द्वितीयः, अकर्तृस्वभावापरावृत्तेः, स हि स्वभावः कालान्तरे उपन-
यतोऽपि सहकारिणः पराणुद्य कार्यं प्रतिबध्नीयात्, तद्विरहादकर्तृशीलः खल्वयमिति। अथ सहकारिषु सत्सु कर्तृस्व-
भावस्तद्विरहे त्वकर्तृरूपोऽयमित्यभिप्रायः, विरुद्धधर्म्माध्यासस्तर्हि भावं भिन्द्यात्, न चायं कालभेदेन परिहर्तव्यः, प्रती-
त्योत्पत्तिकद्धर्म्मसमुदायाद्धर्म्मिणोऽनतिरेकात्, अन्यथा तस्य सामर्थ्यासामर्थ्याभ्यां भिन्नस्य निरुपाख्यत्वापत्तेः, न च परं
प्रत्यापाद्याप्रसिद्धिः, अयमङ्कुरो यदि स्वधर्म्मभिन्नः स्यादङ्कुरो न स्यात्पटवदित्यापादनार्थत्वात्, उपकारपक्षस्त्वनेकमुखा-
नवस्थादुस्थतयोपन्यासानर्ह एवेति। न च क्षणिकपक्षेऽपि निरपेक्षात्कदाचिदपि कार्य्यानुत्पत्तेः सापेक्षस्यैवार्थक्रियाकारि-
त्वमाश्रयणीयं तत्त्वं च नानुपकारापेक्षायामतिप्रसङ्गात्, उपकारापेक्षायां चानवस्थादौस्थ्यमेव, तथा पुञ्जात्पुञ्जोत्पत्तौ
बीजमपि पवनपाथस्तेजोऽङ्कुरान् जनयतीति पक्षे किं येनैव स्वभावेनाङ्कुरं करोति तेनैव पवनादीनन्येन वा? नाद्यः, एकस्व-
भावाधीनत्वेन कार्याणामभेदप्रसङ्गात्, पवनादिकं यदि यावदङ्कुरप्रयोज्यं स्यादङ्कुरं स्यादित्यापादयितुं शक्यत्वात्, न द्वितीयः,

एकस्यापि क्षणस्य स्वभावभेदेन भेदापत्तेः, तव मते स्वभावस्वभाववतोरभेदाभ्युपगमादिति वाच्यं, इतरसाहित्यनियतायां फलोपधानलक्षणायामपेक्षायां क्षणिकस्य सापेक्षत्वादेव समर्थस्य सहकार्य्यव्यभिचारात्, योग्यत्वे सतीतरव्यतिरेकात्कार्य्यो-भाववत्त्वलक्षणायां चापेक्षायां तस्य निरपेक्षत्वादेव तैर्विना तस्यासत्त्वाद्विशिष्टार्थानिर्वचनात्, स्थिरस्य तु भावस्य तैर्विनापि समर्थत्वे कार्य्यकरणप्रसङ्गस्य वज्रलेपत्वात्, एकस्यैवानेककार्य्यकारिस्वभावस्य स्वकारणादुत्पत्तेः कार्य्यभेदेन स्वभावभेदापादनस्य च दूरे निरसनात्, एतेनानङ्कुरस्य पवनादेरङ्कुरत्वेनैकजातीयताप्रसङ्गः, अनङ्कुरदेशस्य तद्देशीयतया एकदेशताप्रसङ्गश्च निरस्तः, नानाजातीयनानादेशीयकार्य्यकारित्वलक्षणैकस्वभावत एव स्वहेतोरुत्पत्तेरभ्युपगमात्, नचास्थैर्य्येऽप्येष न्यायः सम्भवति, तदुत्पत्तेरनन्तरमेव तत्कार्यकरणप्रसङ्गात्, सामग्र्याः कार्य्योत्पत्तिव्याप्यत्वापेक्षया कुर्वद्रूपत्वसामर्थ्यवतः कारणस्यैव कार्य्योत्पत्तिव्याप्यत्वे लाघवात्, त्वया हि स्वेतरकारणविशिष्टवीजत्वादिनाङ्कुराद्यु-त्पत्तिव्याप्यत्वं कर्त्तव्यं, मया तु कुर्वद्रूपत्वेनैवेति, एतेन क्षणिकोऽपि भावः कुर्वद्रूपः सहकारिभिः सहैव करोतीति नियतस्वभावश्चेदन्वयवत्तैर्विना (न) करोत्येवेति व्यतिरेकोप्यवर्जनीयः, अन्वयव्यतिरेकनियमयोर्मिथो नान्तरीयकत्वमिति त्वदीयसिद्धान्तात्, तथा च व्यतिरेकनियमे सहकारिणः स्वकारणादापततोऽपि निवार्य न कुर्य्यात्, तैर्विना न करोतीति स्वभावाप्रच्यवात्, अथ स्वभावाधीनसन्निधीनां सहकारिणामुपनयनापनयनयोरयमनीश्वरः एव यद्युपनिवन्धेन तूच्यते यदि सहकारिणो न स्युर्न कुर्य्यादिति न दोष इति चेत्?स्थिरपक्षेऽप्येवं वक्तुं शक्यं, स्वकारणाधीनसन्निधीनां सहकारिणामुपनय-

नापनयनयोरयमनीश्वर एव यद्युपनिबन्धेन तूच्यते यदि सहकारिणः स्युः कुर्य्यादित्याद्युदयनोक्तमपास्तं, सहकार्य्यभावस्य कार्य्याभावव्याप्यत्वेन व्यतिरेकपक्षे यद्युपनिबन्धसम्भवेऽप्यन्वयपक्षे तदसम्भवात्, लाघवात् कारणस्यैव कार्य्योत्पत्तिव्याप्यत्वेन सहकारिघटितसामग्र्याऽतथात्वेनापाद्यापादकयोर्व्याप्त्यप्रसिद्धेः, अथ क्षणिकोऽपि भावः स्वकालस्थ एकामपि यां काञ्चिदर्थक्रियां करोति तामेव कालान्तरे कुतो न करोति, असत्त्वादिति चेत्? करणस्य सत्त्वाप्रयुक्तत्वात्, अत एव स्वप्नावसानकं विज्ञानं प्रहराद्यन्तरितमपि सुषुप्तस्य जागराद्यज्ञानमुत्पादयतीति प्रज्ञाकरः, असामर्थ्यादेव न करोतीति चेत्? तर्हि कालभेदेन सामर्थ्यासमर्थतया भेदापत्तिरिति चेत्? न, वस्तुतः स्वकाले समर्थस्य कालान्तरेऽसमर्थतया संवृत्यैव व्यवहारात् अभावानुप्रवेशेन वस्तुसिद्ध्यापादने शशविषाणादेरपि सिद्धिप्रसङ्गात्, अत एव क्षणिकस्यापि प्रथमं सतः पश्चादसत्त्वे स्वभावविपर्यय इति निरस्तं, स्वदेशकालस्थस्यैवान्यदेशकालयोरसद्व्यवहारकारिस्वभावाभ्युपगमेनैवोपपत्तेर्निषेधव्यवहाराद्विधिव्यवहारस्य बलवत्त्वे लाघवमेव विनिगमकं। ननु क्षणिकपक्षे क्षणिकानामेव हेतुत्वे तत्तत्क्षणोत्पन्नानामुदासीनानामपि हेतुत्वं किं न स्यादिति चेत्? न, कुर्वद्रूपत्वजात्या प्रसिद्धहेतूनामेवानुगमेनानतिप्रसङ्गात्, अन्वयव्यतिरेकाभ्यां सादृश्यानुसारेणैव कार्य्यकारणभावव्यवहारात् तन्निश्चयानुसारेणैव तच्छक्त्यानुभवस्यापि प्रकल्पनात्। अथाऽसतोऽजनकत्वान्न क्षणविशरारोः कार्य्यप्रसवः इति चेत्? न, अनभ्युपगमात्, कार्य्यकाले सत्त्वस्य कारणतायामप्रयोजकत्वात् कुर्वद्रूपत्वस्यैव तथात्वात्, तथाप्यविनष्टात् द्वितीयक्षणव्यापारसमावेशवर्तिनः कार्य्यप्रसवाभ्युपगमे क्षणभङ्गभङ्गप्रसङ्ग

१ च्छक्त्या.

इति चेत् ? न, द्वितीयक्षणप्रतीक्षाव्यतिरेकेणापि स्वमहिम्नैव कार्य्यकरणप्रवृत्त्यभ्युपगमात्, अन्यथा द्वितीयक्षणभाविव्यापारजननेऽप्यपरव्यापारसमावेशव्यतिरेकेणाप्रवृत्तेः स्तत्राप्यपरव्यापारसमावेशकल्पनायामनवस्थानात् अपरव्यापारनिवर्तकत्वाभ्युपगमे च किमपराद्धं कार्येण येनाद्यव्यापारं विनैव न तज्जन्यत इति, न च व्यापारमन्तरेणार्थक्रिया नोपपत्तिमती, व्यापारेणैव व्यभिचारादिति विभावनीयं। अथानष्टात्कारणादुपजायमाने कार्य्ये कार्य्यकारणयोः सहभावप्रसक्तिर्नष्टाच्च कारणात्कार्य्योत्पत्त्यभ्युपगमे तृतीयक्षणे तत्प्रसङ्गः, तथाहि प्रथमे क्षणे कारणसत्ता द्वितीये तद्विनाशः तृतीये च कार्य्योत्पत्तिरिति चेत् ? न, यथैव कारणविनाशस्तत्सत्तापूर्वको नष्टाद्भवति तथैव तत्समानकालं कार्य्यं नष्टात्कारणाद्भविष्यतीति दोषाभावात्, वतैवं विनाशोऽपि हेतुमान् स्यादिति चेत् ? न, नीरूपत्वेन तत्र हेतुव्यापार(रा)सम्भवात् तदुपन्यासस्यात्र व्यवधायककालासम्भवदर्शनार्थत्वात्, ततो द्वितीयक्षणे कारणं नश्यति कार्य्यं चोपजायत इति कुतस्तयोः सहभावप्रसक्तिः, तदुक्तं "अनष्टाज्जायते कार्य्यं हेतुश्चान्योऽपि तत्क्षणं। क्षणिकत्वात्स्वभावेन तेन नास्ति सहस्थितिः" इति अत्र चाविद्धकर्णोद्योतकरादिभिर्यदुक्तं "यदि तुलान्तयोर्नमनोनमनवत्कार्य्योत्पत्तिकाल एव कारणविनाशस्तदा कार्य्यकारणभावो न भवेत्, यतः कारणस्य विनाशः कारणोत्पाद एव "उत्पाद एव विनाश" इति वचनात् एवं च कारणेन सह कार्य्यमुत्पन्नमिति प्राप्तं, यदि च स एव विनाशस्तदा प्रथमेऽपि क्षणे न सत्ता भावस्य स्यात्, तदैव विनाशात्, भावस्यैव विनाशत्वे सर्वदाभावस्य सत्त्वं वा स्यादन्यथा क्षणोत्तरं तन्नाशाभ्युपगमस्याप्रामाणिकत्वप्राप्तेः, अथ कारणोत्पादात्कारणविनाशो भिन्नस्तदा कृतकत्वस्वभावत्वमनित्यत्वस्य न भवेत्, उत्पादविनाशयोस्तादात्म्यसम्बन्ध एव तस्य वक्तुं शक्यत्वात्,

व्यतिरिक्ते च नाशे समुत्पन्ने न भावस्य निवृत्तिरिति कथं क्षणिकत्वमिति" तन्निरस्तं, यतो द्विविधो विनाशः संव्यवहा-
रार्थस्तात्त्विकश्च, आद्यो भावनिवृत्तिरूप एव, द्वितीयश्च भावरूपः, तत्र कारणनिवृत्तिरूपोऽभावो लोकप्रतीत एव
नायं भावस्वभाव इष्यते, नापि कारणोत्पादभिन्नोऽभिन्नो वा, नीरूपत्वात् भेदाभेदप्रतिषेध एव केवलमस्य क्रियते, तदुक्तं
"भावे ह्येकविकल्पः स्याद्विधेर्वस्त्वनुरोध(तः)" इति तेन व्यतिरिक्ते नाशे जाते क्षणिकरूपस्य भावस्यानिवृत्तिरित्यपास्तं,
यतश्च द्वितीयक्षणोत्पत्तिकाल एव प्रथमक्षणनिवृत्तिस्तेनैकक्षणस्थो यो भावो विनाशशब्देनोच्यते, अयं च भावरूपत्वात्ता-
त्विकः साधनस्वभाव एव विनाशः कार्य्योत्पत्तिकाले च निवर्तत इति, कार्य्यभिन्नकालभावेन च सर्वकालमस्य सद्भावो
भावस्यासत्त्वात्, यद्वा विनाशोऽस्य ( स्यास्तीति ) विनाशीति व्युत्पत्तेरविनाशिव्यावृत्तो भाव एव नाश उच्यत इति न
दोषः। तदेवं क्षणिकाः सर्वे स्वपर्य्यायास्त एवार्थक्रियाकारित्वेन सत्या इति निर्व्यूढं ॥ १६ ॥ नन्वस्मिन्नेवायं घट
इति प्रत्यभिज्ञाऽनुपपत्तिः, भिन्नेषु घटक्षणेष्वेकत्वस्य प्रतिसन्धातुमशक्यत्वात्, नच प्रत्यभिज्ञा न प्रमाणं,
"तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितं । अदुष्टकारणारब्धं प्रमाणं लोकसम्मतं" ॥ १ ॥ इति प्रमाणलक्षणयो-
गात्, न च स्मृतिपूर्वकत्वात्स एवायमिति प्रत्यभिज्ञानस्य प्रत्यक्षत्वमयुक्तमिति शङ्कनीयं, सत्सम्प्रयोगजत्वेन स्मरणप-
श्चाद्भाविनोऽप्यक्षजप्रत्ययस्य लोके प्रत्यक्षेण प्रसिद्धत्वात्, न च पूर्वापरकालसम्बन्धिद्रव्यस्यैकत्वात्कालस्य चाऽतीन्द्रि-
यत्वात्प्रमेयानतिरेकादस्याप्रामाण्यमिति वाच्यं, तथापि सोऽयं न वेति सन्देहनिराकरणेनास्य प्रामाण्यसिद्धेर्विषयातिरे-

कस्यैं(स्ये)व सन्देहापाकरणस्यापि प्रामाण्यनिवन्धनत्वात्, न च सविकल्पत्वादेवास्या अप्रामाण्यं, नीलमनुभवामीति विकल्पादविकल्पनीलानुभवस्य सौगतैरिव पूर्वदृष्टं पश्यामीति विकल्पात्, अविकल्पात्तु यद्रूपशब्दानुभवस्यास्माभिः कल्पयितुं शक्यत्वादिति जाग्रत्कत्वं प्रत्यभिज्ञाने कथं क्षणिकपर्य्यायसिद्धिरित्याशङ्कायामाह—

यथा लूनपुनर्जातनखादावेकतामतिः । तथैव क्षणसादृश्याद् घटादौ द्रव्यगोचरा ॥ १७ ॥

"यथेति" यथा लूनपुनर्जातनखादौ भेदाग्रहात् एकतामतिः स एवायं नख इत्याद्यभेदाभिमानात्तथैव क्षणसादृश्यात्-सदृशापरापरक्षणोत्पत्तिरूपदोषात् घटादौ द्रव्यगोचरैकता मतिर्भवेत्, तथा च प्रत्यभिज्ञाया भ्रान्तत्वान्न क्षणिकत्वसिद्धिप्रतिवन्धकत्वमिति भावः, न च लूनपुनर्जातनखादौ विच्छेदाभिज्ञैर्भेदग्रहणादस्तु तत्राभेदग्रहो भ्रमः अत्र तु नैवमिति वैषम्यमिति वाच्यं, अवगतविच्छेदानामपि प्रमातृणां समानवर्णसंस्थानप्रमाणेषु केशादिषु तदन्येषामिव प्रत्यक्षेण भेदनिश्चयाभावात्, आनुमानिकभेदनिश्चयस्य चात्रापि साम्यात्, न च विकल्पवशादनुभवस्य विषयव्यवस्था सङ्गच्छते, किञ्च सोऽयमित्याकारयोरन्योऽन्यानुप्रवेशेन भाने परोक्षापरोक्षरूपमेकं ज्ञानं स्यादन्योन्याननुप्रवेशेन च भाने प्रतिभासद्वयं परस्परविविक्तमायातमिति प्रतिभास्यस्यापि भेद एव ध्रुवः, नचात्रुट्यद्रूपतया प्रतिभासात् प्रतिभास्यस्यैकत्वं, पूर्वदृष्टाप्रतिभासनेन त्रुट्यद्रूपताया विद्युदादाविव स्तम्भादावपि तुल्यत्वात्, अविरतोपलब्धिरूपायाश्चात्रुट्यद्रूपतायाः अगृहीतभेदान्यान्यविषयत्वेनाप्युपपत्तिरिति दिक् । ननु तथापि विनाशस्य सहेतुकत्वात्तद्धेत्वभावादेव कियत् कालं स्थैर्य्योपपत्तौ

न घटादेः क्षणिकत्वमिति चेत् ? न, विनाशस्य सहेतुकताया एवासिद्धेः, तथाहि इन्धनादीनामग्निसंयोगावस्थायां त्रितयमुपलभ्यते तदेवेन्धनादि, कश्चिद्विकारोऽङ्गारादिः, तुच्छरूपश्चाभावः कल्पनाज्ञानप्रतिभासी, तत्राग्न्यादीनां क्व व्यापार इति वक्तव्यं, न तावदिन्धनादिजन्मनि, स्वहेतुत एव तेषामुत्पत्तेः, नाप्यङ्गारादौ, विवादाभावात्, किन्त्वग्न्यादिभ्योऽङ्गाराद्युत्पत्ताविन्धनादेरनिवृत्तत्त्वात्तथैवोपलब्ध्यादिप्रसङ्गः, अङ्गारादेरेवेन्धनादिनिवृत्तिरूपत्वात् तद्ग्रहे न तदुपलब्धिरिति चेत् ? न, तस्य निवृत्तित्वे साधकाभावात्, मिथोऽनुपलम्भनियमस्य तत्साधकत्वे अन्योन्याश्रयात्, अव्यक्तस्वात्मरूपविकारान्तरोध्वंसः इत्यनुद्घोष्यं, बुद्ध्यादीनामात्मरूपविकारापत्तौ प्रमाणाभावात्, प्रदीपादेश्चाव्यक्तरूपस्य विकारस्य कार्य्यविशेषादर्शनेनासिद्धेः । किञ्च भावान्तरस्य प्रध्वंसत्वे तद्विनाशात् घटाद्युन्मज्जनप्रसङ्गः, घटप्रागभावतत्प्रध्वंसानाधारकालस्य घटाधारत्वव्याप्यत्वात्, न च कपालादेर्भावरूपतैव ध्वस्ता नाऽभावात्मकतेति नायं दोपः, धर्म्मिप्रच्यवे धर्म्मप्रच्यवात् निराश्रयधर्म्मावस्थानायोगात्, कपालादिकार्य्यपरम्परायामेव घटध्वंसत्वस्वीकारात् नायं दोप इति चेत् ? न, एवं सति घटध्वंसत्वस्य व्यासज्यवृत्तित्वे यावदाश्रयभानं विनाऽभानप्रसङ्गात्, तस्मात्तुच्छरूप एव ध्वंस इत्यवशिष्यते, तत्र च कारकव्यापारासम्भव एव, हेतुमत्त्वे तस्य भावत्वप्रसङ्गात्, भवनधर्म्मा हि भावोऽङ्कुरादावपि भावशब्दप्रवृत्तिनिमित्तं नापरमुपलभ्यते, तच्चेदभावेऽस्ति कथं न भाव इति, स्वग्राहिणि ज्ञाने प्रतिनियतेन रूपेणाप्रतिभासनादभाव इत्येतदपि न वक्तव्यं, अत्यन्तपरोक्षचक्षुरादीनामप्यभावत्वापत्तेः । किञ्च यद्यभावरूपो विनाशो हेतुमांस्तदा हेतुभेदात्तद्भेदप्रसङ्गः,

नचायमनुभूयते, अग्न्यभिघातादिहेतुभेदेऽपि घटनाशभेदाननुभवात्, तस्मादहेतुरयं निःस्वभावस्तुच्छोभ्युपगन्तव्यः, अग्निसंयोगादयस्तु काष्ठादिष्वङ्गारादिकमेव जनयन्ति काष्ठादयः स्वरसत एव निरुध्यन्त इत्यनवद्यं, किञ्च स्वभावतो भावानां नश्वरत्वेऽपरव्यापारवैफल्यादनश्वरत्वे च तत्स्वभावस्यान्यथाकर्तुमशक्यत्वात् व्यर्थो नाशहेतुः, अथ स्वहेतुभिर्नियतकालस्थायिस्वभावः पदार्थो जनित इति नोत्पादानन्तरमेव विनष्टुमुत्सहते इति चेत् ? तर्हि तस्मिन्स्वभावे व्यवस्थितः कथमन्तेऽपि विनश्येत् तथाचान्तेऽन्ते तावत् तावत्कालस्थायिस्वभावानपगमे सदा स्थाण्णुरेव स्यात् स्वभावापरावृत्तावकिञ्चित्करैर्मुद्गरादिभिस्तन्नाशायोगात्, न च भवतामप्यकिञ्चित्करमपि मुद्गरादिकमपेक्ष्य कथं प्रवाहो निवर्तत इति वाच्यं, यतो न विशरारुक्षणव्यावृत्तोऽपरः प्रवाहो विद्यते यो निवर्तमानोऽकिञ्चित्करं मुद्गरादिकमपेक्षत इति प्रतिजानीमहे, किन्तु परस्परविविक्तपूर्वापरक्षणा एव प्रवाहः ते च स्वरसत एव निरुध्यन्त इति न क्वचिदकिञ्चित्करापेक्षानिवृत्तिः, केवलं मुद्गरादिना रहिता सामग्री अविभक्तं कार्य्यं सम्पादयति, तत्सन्निधाने तु विभक्तं कार्य्यान्तरं जनयतीति विशेषः, नतु मुद्गरादयः कारणसामर्थ्यं खण्डयतीति । अथायं विकल्पोऽतिप्रसञ्जकत्वादसारः, तथाहि–उत्पादेऽप्येवं शक्यत एव वक्तुं, स्वभावतो ह्युत्पत्तिस्वभावस्य न किञ्चिदुत्पत्तिहेतुभिः, तत्तत्स्वभावतयैव समुत्पादात्, अनुत्पत्तिस्वभावस्य तु व्यर्था उत्पत्तिहेतवः, तथाचान्यथात्वस्य कर्तुमशक्यत्वात्, मैवम्, अभूत्वा भवनलक्षणायामुत्पत्तौ च भावगर्भायां हेतोरकिञ्चित्करत्वस्येष्टापत्तेः उत्पत्तिस्वभावभावीति(न्युन्)मुखीभूते कारणकलापे कार्य्यकारित्वं(त्व) व्यपदेशहेतौ अकिञ्चित्करत्ववचनस्य च व्याहतत्वादुत्पत्तिध्वंसस्वभावात्मको भावः सहेतुक एव, उत्पत्तिध्वंसयोः सांवृतयोस्त्व(न)हेतुः, कथं ? केवलं भावमुख्यतयो-

न घटादेः क्षणिकत्वमिति चेत् ? न, विनाशस्य सहेतुकताया एवासिद्धेः, तथाहि इन्धनादीनामग्निसंयोगावस्थायां त्रितयमुपलभ्यते तदेवेन्धनादि, कश्चिद्विकारोऽङ्गारादिः, तुच्छरूपश्चाभावः कल्पनाज्ञानप्रतिभासी, तत्राग्न्यादीनां क्व व्यापार इति वक्तव्यं, न तावदिन्धनादिजन्मनि, स्वहेतुत एव तेषामुत्पत्तेः, नाप्यङ्गारादौ, विवादाभावात्, किन्त्वग्न्यादिभ्योऽङ्गाराद्युत्पत्ताविन्धनादेरनिवृत्तत्वात्तथैवोपलब्ध्यादिप्रसङ्गः, अङ्गारादेरेवेन्धनादिनिवृत्तिरूपत्वात् तद्ग्रहे न तदुपलब्धिरिति चेत् ? न, तस्य निवृत्तित्वे साधकाभावात्, मिथोऽनुपलम्भनियमस्य तत्साधकत्वे अन्योन्याश्रयात्, अव्यक्तस्वात्मरूपविकारान्तरोध्वंसः इत्यनुद्घोष्यं, बुद्ध्यादीनामात्मरूपविकारापत्तौ प्रमाणाभावात्, प्रदीपादेश्चाव्यक्तरूपस्य विकारस्य कार्य्यविशेषादर्शनेनासिद्धेः । किञ्च भावान्तरस्य प्रध्वंसत्वे तद्विनाशात् घटाद्युन्मज्जनप्रसङ्गः, घटप्रागभावतत्प्रध्वंसानाधारकालस्य घटाधारत्वव्याप्यत्वात्, न च कपालादेर्भावरूपतैव ध्वस्ता नाऽभावात्मकतेति नायं दोषः, धर्म्मिप्रच्यवे धर्म्मप्रच्यवात् निराश्रयधर्म्मावस्थानायोगात्, कपालादिकार्य्यपरम्परायामेव घटध्वंसत्वस्वीकारात् नायं दोष इति चेत् ? न, एवं सति घटध्वंसत्वस्य व्यासज्यवृत्तित्वे यावदाश्रयभानं विनाऽभानप्रसङ्गात्, तस्मात्तुच्छरूप एव ध्वंस इत्यवशिष्यते, तत्र च कारकव्यापारासम्भव एव, हेतुमत्त्वे तस्य भावत्वप्रसङ्गात्, भवनधर्म्मा हि भावोऽङ्कुरादावपि भावशब्दप्रवृत्तिनिमित्तं नापरमुपलभ्यते, तच्चेदभावेऽस्ति कथं न भाव इति, स्वग्राहिणि ज्ञाने प्रतिनियतेन रूपेणाप्रतिभासनादभाव इत्येतदपि न वक्तव्यं, अत्यन्तपरोक्षचक्षुरादीनामप्यभावत्वापत्तेः । किञ्च यद्यभावरूपो विनाशो हेतुमांस्तदा हेतुभेदात्तद्भेदप्रसङ्गः,

नचायमनुभूयते, अग्न्यभिघातादिहेतुभेदेऽपि घटनाशभेदाननुभवात्, तस्मादहेतुरयं निःस्वभावस्तुच्छोऽभ्युपगन्तव्यः, अग्निसंयोगादयस्तु काष्ठादिष्वङ्गारादिकमेव जनयन्ति काष्ठादयः स्वरसत एव निरुध्यन्त इत्यनवद्यं, किञ्च स्वभावतो भावानां नश्वरत्वेऽपरव्यापारवैफल्यादनश्वरत्वे च तत्स्वभावस्यान्यथाकर्तुमशक्यत्वात् व्यर्थो नाशहेतुः, अथ स्वहेतुभिर्नियतकालस्थायिस्वभावः पदार्थो जनित इति नोत्पादानन्तरमेव विनष्टुमुत्सहते इति चेत् ? तर्हि तस्मिन्स्वभावे व्यवस्थितः कथमन्तेऽपि विनश्येत् तथाचान्तेऽन्ते तावत् तावत्कालस्थायिस्वभावानपगमे सदा स्थाष्णुरेव स्यात् स्वभावापरावृत्तावकिञ्चित्करैर्मुद्गरादिभिस्तन्नाशायोगात्, न च भवतामप्यकिञ्चित्करमपि मुद्गरादिकमपेक्ष्य कथं प्रवाहो निवर्तत इति वाच्यं, यतो न विशरारुक्षणव्यावृत्तोऽपरः प्रवाहो विद्यते यो निवर्तमानोऽकिञ्चित्करं मुद्गरादिकमपेक्षत इति प्रतिजानीमहे, किन्तु परस्परविविक्तपूर्वापरक्षणा एव प्रवाहः ते च स्वरसत एव निरुध्यन्त इति न क्वचिदकिञ्चित्करापेक्षानिवृत्तिः, केवलं मुद्गरादिना रहिता सामग्री अविभक्तं कार्य्यं सम्पादयति, तत्सन्निधाने तु विभक्तं कार्य्यान्तरं जनयतीति विशेषः, नतु मुद्गरादयः कारणसामर्थ्यं खण्डयतीति । अथायं विकल्पोऽतिप्रसञ्जकत्वादसारः, तथाहि—उत्पादेऽप्येवं शक्यत एव वक्तुं, स्वभावतो ह्युत्पत्तिस्वभावस्य न किञ्चिदुत्पत्तिहेतुभिः, तत्तत्स्वभावतयैव समुत्पादात्, अनुत्पत्तिस्वभावस्य तु व्यर्था उत्पत्तिहेतवः, तथाचान्यथात्वस्य कर्तुमशक्यत्वात्, मैवम्, अभूत्वा भवनलक्षणायामुत्पत्तौ च भावगर्भायां हेतोरकिञ्चित्करत्वस्येष्टापत्तेः उत्पत्तिस्वभावभावीति(न्युन्)मुखीभूते कारणकलापे कार्य्यकारित्वं(त्व) व्यपदेशहेतौ अकिञ्चित्करत्ववचनस्य च व्याहतत्वादुत्पत्तिध्वंसस्वभावात्मको भावः सहेतुक एव, उत्पत्तिध्वंसयोः सांवृतयोस्त्व(न)हेतुः, कथं ? केवलं भावमुख्यतयो-

त्पत्तित्वेन सहेतुकत्वव्यवहारः,नाशत्वेन चाभावमुख्यतयाऽहेतुकत्वव्यवहारः, उत्पत्तिव्यवहारविकल्पसमनन्तरप्रत्यक्षं चाद्यान्तक्षणयोरेव, परेषां प्रागभावध्वंसप्रत्यक्षयोः प्रतियोगिव्याप्यसन्निकर्षाणां हेतुत्वकल्पनापेक्षया अस्माकमुत्पत्तिध्वंसनिश्चये विलक्षणहेतुताकल्पन एव लाघवात्, अत एव भ्रान्तिकारणविगमादन्ते प्रत्यक्षनिबन्धनः क्षणक्षयनिश्चय उत्पद्यत इति सौगत इति दिक् । इदं च शुद्धपर्य्यायास्तिकनयमतं, तदवान्तरभेदास्तु यावदपश्चिमविकल्पनिर्वचनं द्रव्यार्थिकावान्तरभेदवत् न्यायसिद्धा नानाविधा अभ्युपगन्तव्याः, अथैवं पश्चिमविकल्पनिर्वचनतया माध्यमिकदर्शनप्रवर्तक एवम्भूत एव शुद्धपर्य्यायार्थिकः स्यात्, इष्यते चर्जुसूत्रोऽपि शुद्धपर्य्यायार्थिक इति कथमियं व्यवस्थेति चेत् ? क्षणिकविषयताव्यापकपर्य्यायविषयताशाली शुद्धपर्य्यायार्थिक इति परिभाषाश्रयणादिति गृहाण, नन्वेवं शुद्धद्रव्यार्थिकपर्यायार्थिकयोरितरेतरविषयप्रतिक्षेपकत्वेन समुदितद्रव्यलक्षणाग्राहित्वेन मिथ्यादृष्टित्वमवान्तरतद्भेदानां च वैपरीत्येन सम्यग्दृष्टित्वं स्यादिति यथाश्रुतशुद्धाशुद्धविवेकानुपपत्तिरिति चेत् ? इदमित्थमेव जात्या शुद्धाशुद्धत्वैकान्तस्य वादिनैव प्रतिक्षिप्तत्वात् यो नयोपयोगः स्वार्थे इतरनयार्थसंयोजनायां व्यापिपर्ति तस्य तावत्यापेक्षया सम्यग्दृष्टित्वस्य, यथाश्रुतार्थप्रवाहप्रवृत्तस्य तथोपयोगवैकल्येन मिथ्यादृष्टित्वस्य च सम्प्रदायसिद्धत्वात् । तदुक्तं "दवं पज्जवविउअं दवविजुत्ता य पज्जवा णत्थि। उप्पाय–ठ्ठिइ–भंगा हंदि दविअलक्खणं एयं ॥१॥ एए पुण संगहओ पाडिक्कमलक्खणं दुविण्हंपि । तम्हा मिच्छद्दिठ्ठी पत्तेयं दो वि मूलनया ॥२॥ णय तइओ अत्थि णओ नय सम्मत्तं न तेसु पडिपन्नं। जेण दुवे एगन्ते विभज्जमाणा

संयोगस्य मिथो विरोधेन तदनुभवप्रसङ्गात्, विषयविशेषाभावेन च तद्वयमरूपत्वात्, समुदितस्योभयविषयत्वेऽपि सम्यक्त्वापादानं कुर्वन्तो विनिश्चिन्वन्तः तत्र "दव्वट्ठियनयपयडी सुद्धा संगहपरूवणाविसओ । पडिरूवे पुण वयणत्थनिच्छओ तस्स ववहारो ॥ ४ ॥ मूलणिमेणं पज्जवणयस्स उज्जुसुयवयणविच्छेदो । तस्स उ सद्दाईया साहपसाहा सुहुमभेया ॥ ५ ॥" इति सम्मतितर्कप्रकरणगाथाभ्यां सामान्यविशेषात्मकवस्तुग्राहिणः संग्रहादयस्तत्प्रभेदाः सर्वे-
संयोजनायां तु वस्तुस्थितेरनतिक्रमात् सम्यक्त्वमेव । यदुक्तं सम्मतावेव—"जह णेयलक्खणगुणा वेरुलियाई मणी विसंजुत्ता । रयणावलिववएसं न लहन्ति महग्घमुल्ला वि ॥ ३ ॥ तह णिययवायसुविणिच्छिया वि अन्नोन्नपक्खनिरवेक्खा । सम्मद्दंसणसद्दं सव्वे वि णया ण पावेन्ति ॥ ४ ॥ जह पुण ते चेव मणी जहा गुणविसेसभागपडिबद्धा । रयणावलि त्ति भण्णइ जहंति पाडिक्कसन्नाओ ॥ ५ ॥ तह सव्वे णयवाया जहाणुरूवविणिउत्तवत्तव्वा । सम्मद्दंसणसद्दं लहन्ति ण विसेससन्नाओ ॥ ६ ॥" इति ।

अणेगन्तो ॥ ३ ॥ जह एए तह अन्ने पत्तेयं दुन्नया नया सब्वे । हंदि हु मूलनयाणं पन्नवणे वावडा ते वि ॥ ४ ॥ सव-
णयसमूहम्मि वि णत्थि णओ उभयवायपण्णवओ । मूलनयाण उ आणं पत्तेयविसेसिअं विंति ॥ ५ ॥" ( स० प्र० गा०
१२–१३–१४–१५–१६ ) त्ति तस्मादितरनयार्थविषयसंयोजनोपयोगमुख्यगौणतया स्वपरार्थग्राहिणामवान्तरभेदानां
सम्यग्दृष्टित्वं युज्यते, नतु स्वतन्त्रकल्पितोभयविषयग्राहिणां नैगमभेदानां इति प्रतिपत्तव्यं, अत एव द्रव्यार्थिकनयपरि-
णामो ह्यर्थान्तरगमनं, न च सर्वथा व्यवस्थानं, न च सर्वथा विनाशः, परिणामस्तद्विदामिष्टः इति, पर्य्यायास्तिकनये च
सत्पर्य्यायेण विनाशः प्रादुर्भावोऽसता च पर्य्यायतः द्रव्याणां परिणामः प्रोक्तः खलु, पर्य्यवा न यस्येति यत्परिणामलक्षणं
परिणामपदव्याख्यायामुक्तं तदुपपद्यते । पूर्वत्र विशिष्टरूपेणोत्पादभङ्गयोः पर्य्यायलक्षणस्योत्तरत्र चाधारतया ध्रौव्यस्य
द्रव्यलक्षणस्य संयोजनयोभयोरपि सम्यग्दृष्टित्वसिद्धेः, कथं तर्हि "जीवो गुणपडिवन्नो नयस्स दवट्ठिअस्स सामइयं ।
सो चेव पज्जवणयट्ठिअस्स जीवस्स एस गुणो" इत्यत्रैकैकनयस्येतरासमानविषयत्वध्रौव्यमुद्राव्य भिन्नाभिन्नद्रव्यपर्य्यायो-
भयग्राहके(क) नयद्वयवादिव्याख्यातृमतं भाष्यकृता निरस्तमिति चेत् ? तत्र किं सामायिकं गुणो द्रव्यं वेति शुद्धगुणत्व-
द्रव्यत्वान्यतरप्रकारकजिज्ञासायां शुद्धद्रव्यास्तिकपर्य्यायास्तिकनययोरेवाश्रयणस्य युक्तत्वात्, अवान्तरभेदाश्रयणे
तादृशजिज्ञासाया अनिवृत्तिप्रसङ्गादिति वोध्यम् । अत एवैकैकस्योभयविषयकत्वाभ्युपगमे संयोगस्योक्तजिज्ञासाऽनिव-
र्तकाधिकविषयानु(रु)पकत्वेनानतिप्रयोजनत्वमेव दोषो भाष्यकृतोद्भावितः, अन्यथा तु प्रत्येकमेकैकविषयत्वेऽप्युभयोर्मि-
लनस्य स्यात्कारलाञ्छनेन सम्यक्त्वापादनं यत्प्रयोजनं तस्य प्रत्येकमुभयविषयकत्वाभ्युपगमेऽपि निष्प्रत्यूहत्वात्, तत्र

मते स्याद्गुणविशिष्टजीव एव सामायिकं स्याज्जीवगुण एव सामायिकमिति मिलिताभिलापवत् मम मते स्याज्जीवाभिन्नगुण एव सामायिकः स्याज्जीवभिन्नगुण एव सामायिकमिति मिलिताभिलापस्यापि सम्भव इति न कश्चिद्दोष इति परेण वक्तुं शक्यत्वात् । न चैवं भङ्गद्वयेऽपि द्वयप्राधान्यालाभः, स्याज्जीवाभिन्नगुण एवेत्यादेः स्याद्गुणाभिन्नजीव एवेत्यादेरपि समानसंवित्संवेद्यतया लाभाभ्युपगमात् । किञ्च मम मते जीवो गुणप्रतिपन्न इति निर्युक्तिप्रतीके गुणाभिन्न इत्यर्थे साम्मुख्यं, तव मते तु गुणानामौत्प्रेक्षिकत्वेन शुक्तौ रजतस्येव जीवे गुणानां वैज्ञानिकसम्बन्धस्यैवाभ्युपगमेन गुणनिरूपितवैज्ञानिकसम्बन्धवानित्यर्थो वाच्य इत्यसाम्मुख्यं । न च मम मते द्रव्यास्तिकपक्षे द्रव्यगुणपदयोरर्थाभेदेन पर्य्यायत्वापत्त्या द्रव्यं गुणो वेत्येकतरनिर्द्धारणानुपपत्तिः, तव मते द्रव्यार्थिकपक्षे गुणस्येव मम मते द्रव्यार्थिकपक्षे द्रव्यगुणयोरभेदस्य वास्तवत्वेऽपि गुणे द्रव्यभेदस्योत्प्रेक्षकस्याङ्गीकारेण तमादाय द्रव्यगुणपदयोः पर्य्यायत्वापत्त्युद्धारसम्भवादित्यपि परेण वक्तुं शक्यमित्याद्यधिकमनेकान्तव्यवस्थायां ॥ १७ ॥

तदेवमुक्तौ द्रव्यार्थिकपर्य्यायार्थिकलक्षणौ मूलनयभेदौ, अनयोर्नैगमादिषु मतभेदेन यथान्तर्भावस्तथाह—

**तार्किकाणां त्रयो भेदा, आद्या द्रव्यार्थतो मताः। सैद्धान्तिकानां चत्वारः, पर्य्यायार्थगताः परे ॥ १८॥**

"तार्किकाणामिति" तार्किकाणां—वादिसिद्धसेनमतानुसारिणां, आद्याः त्रयो भेदाः—नैगमसङ्ग्रहव्यवहारलक्षणाः, द्रव्यार्थतो मताः—द्रव्यमेवार्थं विषयीकृत्याभिप्रेताः, आद्यास्त्रयो भेदास्तार्किकमते द्रव्यार्थिका इति सम्मुखोर्थः, सैद्धान्तिकानां—

जिनभद्रगणिक्षमाश्रमणवचनानुसारिणां चत्वारः–आद्याः ऋजुसूत्रसहिताः द्रव्यार्थिका इति शेषः, परे तु उक्तशेषा उभ-
येषामपि पर्य्यायार्थगताः–पर्य्यायार्थिका, ऋजुसूत्रादयश्चत्वारः पर्य्यायार्थिका वादिनः, शब्दादयस्त्रय एव च क्षमाश्रम-
णानामिति निर्गलितोऽर्थः' ऋजुसूत्रो यदि द्रव्यं नाभ्युपेयात्तदा उक्तं "उजुसुयस्स एगे अणुवउत्ते एगं दव्वावस्सयं पुह-
त्तं णेच्छइ" इति सूत्रं विरुध्येतेति सैद्धान्तिकाः । तार्किकानुसारिणस्तु अतीतानागतपरकीयभेदपृथक्त्वपरित्यागादृजुसूत्रेण
स्वकार्य्यसाधकत्वेन स्वकीयवर्तमानवस्तुन एवोपगमान्नास्य तुल्यांशध्रुवांशलक्षणद्रव्याभ्युपगमः, अत एव नाश्यासदृघ-
टितभूतभाविपर्य्यायकारणत्वरूपद्रव्यत्वाभ्युपमोऽप्यध्रुवधर्म्माधारांशद्रव्यमपि नास्य विषयः, शब्दनयेष्वतिप्रसङ्गात् ।
उक्तसूत्रं त्वनुपयोगांशमादाय वर्तमानावश्यकपर्य्याये द्रव्यपदोपचारात् समाधेयं, पर्यायार्थिकेन मुख्यद्रव्यपदार्थस्यैव प्रति-
क्षेपात् । यद्विचैवमप्येकानुपयुक्त एकं द्रव्यावश्यकमित्यत्रानुपयोगस्य विषयनियन्त्रितत्वेनार्थैक्यादुद्देश्यविधेयभावानुपप-
त्तिरिति विभाव्यते, यथा द्रव्यावश्यकपदं द्रव्यावश्यकत्वेन व्यवहर्तव्यं, परं विवरणपरतया चैतत् योजनीयमिति न कश्चि-
द्दोष इत्यालोचयामः ॥ १८ ॥ उक्तानुभयनयभेदानेव विशिष्य लक्षयितुं नामग्राहं सङ्गृह्णामि—

**नैगमः सङ्ग्रहश्चैव व्यवहारर्जुसूत्रकौ । शब्दः समभिरूढाख्य एवम्भूतश्च सप्त ते ॥ १९ ॥**

नैगम इति स्पष्टः, ते मूलनयप्रभेदाः ॥ १९ ॥ तत्रादौ नैगमलक्षणमाह—

**निगमेषु भवो बोधो, नैगमस्तत्र कीर्तितः । तद्भवत्वं पुनर्लोकप्रसिद्धार्थोपगन्तृता ॥ २० ॥**

१ "गाभास" इतिमूलप्रतिषु "मात्रस" इति नयरहस्ये.

मते स्याद्गुणविशिष्टजीव एव सामायिकं स्याज्जीवगुण एव सामायिकमिति मिलिताभिलापवत् मम मते स्याज्जीवाभिन्नगुण एव सामायिकः स्याज्जीवभिन्नगुण एव सामायिकमिति मिलिताभिलापस्यापि सम्भव इति न कश्चिद्दोष इति परेण वक्तुं शक्यत्वात् । न चैवं भङ्गद्वयेऽपि द्वयप्राधान्यालाभः, स्याज्जीवाभिन्नगुण एवेत्यादेः स्याद्गुणाभिन्नजीव एवेत्यादेरपि समानसंवित्संवेद्यतया लाभाभ्युपगमात् । किञ्च मम मते जीवो गुणप्रतिपन्न इति निर्युक्तिप्रतीके गुणाभिन्न इत्यर्थे साम्मुख्यं, तव मते तु गुणानामौत्प्रेक्षिकत्वेन शुक्तौ रजतस्येव जीवे गुणानां वैज्ञानिकसम्बन्धस्यैवाभ्युपगमेन गुणनिरूपितवैज्ञानिकसम्बन्धवानित्यर्थो वाच्य इत्यसाम्मुख्यं । न च मम मते द्रव्यास्तिकपक्षे द्रव्यगुणपदयोरर्थाभेदेन पर्य्यायत्वापत्त्या द्रव्यं गुणो वेत्येकतरनिर्द्धारणानुपपत्तिः, तव मते द्रव्यार्थिकपक्षे गुणस्येव मम मते द्रव्यार्थिकपक्षे द्रव्यगुणयोरभेदस्य वास्तवत्वेऽपि गुणे द्रव्यभेदस्योत्प्रेक्षकस्याङ्गीकारेण तमादाय द्रव्यगुणपदयोः पर्य्यायत्वापत्त्युद्धारसम्भवादित्यपि परेण वक्तुं शक्यमित्याद्यधिकमनेकान्तव्यवस्थायां ॥ १७ ॥

तदेवमुक्तौ द्रव्यार्थिकपर्य्यायार्थिकलक्षणौ मूलनयभेदौ, अनयोर्नैगमादिषु मतभेदेन यथान्तर्भावस्तथाह—

**तार्किकाणां त्रयो भेदा, आद्या द्रव्यार्थतो मताः। सैद्धान्तिकानां चत्वारः, पर्य्यायार्थगताः परे ॥ १८॥**

"तार्किकाणामिति" तार्किकाणां—वादिसिद्धसेनमतानुसारिणां, आद्याः त्रयो भेदाः—नैगमसङ्ग्रहव्यवहारलक्षणाः, द्रव्यार्थतो मताः—द्रव्यमेवार्थं विषयीकृत्याभिप्रेताः, आद्यास्त्रयो भेदास्तार्किकमते द्रव्यार्थिका इति सम्मुखोर्थः, सैद्धान्तिकानां—

जिनभद्रगणिक्षमाश्रमणवचनानुसारिणां चत्वारः—आद्याः ऋजुसूत्रसहिताः द्रव्यार्थिका इति शेषः, परे तु उक्तशेषा उभयेषामपि पर्य्यायार्थगताः—पर्य्यायार्थिका, ऋजुसूत्रादयश्चत्वारः पर्य्यायार्थिका वादिनः, शब्दादयस्त्रय एव च क्षमाश्रमणानामिति निर्गलितोऽर्थः' ऋजुसूत्रो यदि द्रव्यं नाभ्युपेयात्तदा उक्तं "उजुसुयस्स एगे अणुवउत्ते एगं दव्वावस्सयं पुहत्तं णेच्छइ" इति सूत्रं विरुध्येतेति सैद्धान्तिकाः । तार्किकानुसारिणस्तु अतीतानागतपरकीयभेदपृथक्त्वपरित्यागादृजुसूत्रेण स्वकार्य्यसाधकत्वेन स्वकीयवर्तमानवस्तुन एवोपगमान्नास्य तुल्यांशध्रुवांशलक्षणद्रव्याभ्युपगमः, अत एव नाश्यासद्घटितभूतभाविपर्य्यायकारणत्वरूपद्रव्यत्वाभ्युपमोऽप्यध्रुवधर्म्माधारांशद्रव्यमपि नास्य विषयः, शब्दनयेष्वतिप्रसङ्गात् । उक्तसूत्रं त्वनुपयोगांशमादाय वर्तमानावश्यकपर्य्याये द्रव्यपदोपचारात् समाधेयं, पर्यायार्थिकेन मुख्यद्रव्यपदार्थस्यैव प्रतिक्षेपात् । यदिचैवमप्येकानुपयुक्त एकं द्रव्यावश्यकमित्यत्रानुपयोगस्य विषयनियन्त्रितत्वेनार्थैक्यादुद्देश्यविधेयभावानुपपत्तिरिति विभाव्यते, यथा द्रव्यावश्यकपदं द्रव्यावश्यकत्वेन व्यवहर्तव्यं, परं विवरणपरतया चैतत् योजनीयमिति न कश्चिद्दोष इत्यालोचयामः ॥ १८ ॥ उक्तानुभयनयभेदानेव विशिष्य लक्षयितुं नामग्राहं सङ्गृह्णामि—

**नैगमः सङ्ग्रहश्चैव व्यवहारर्जुसूत्रकौ । शब्दः समभिरूढाख्य एवम्भूतश्च सप्त ते ॥ १९ ॥**

नैगम इति स्पष्टः, ते मूलनयप्रभेदाः ॥ १९ ॥ तत्रादौ नैगमलक्षणमाह—

**निगमेषु भवो बोधो, नैगमस्तत्र कीर्तितः । तद्भवत्वं पुनर्लोकप्रसिद्धार्थोपगन्तृता ॥ २० ॥**

१ "माभास"इतिमूलप्रतिषु "मात्रस"इति नयरहस्ये.

मते स्याद्गुणविशिष्टजीव एव सामायिकं स्याज्जीवगुण एव सामायिकमिति मिलिताभिलापवत् मम मते स्याज्जीवाभिन्नगुण एव सामायिकः स्याज्जीवभिन्नगुण एव सामायिकमिति मिलिताभिलापस्यापि सम्भव इति न कश्चिद्दोष इति परेण वक्तुं शक्यत्वात् । न चैवं भङ्गद्वयेऽपि द्वयप्राधान्यालाभः, स्याज्जीवाभिन्नगुण एवेत्यादेः स्याद्गुणाभिन्नजीव एवेत्यादेरपि समानसंवित्संवेद्यतया लाभाभ्युपगमात् । किञ्च मम मते जीवो गुणप्रतिपन्न इति निर्युक्तिप्रतीके गुणाभिन्न इत्यर्थे साम्मुख्यं, तव मते तु गुणानामौत्प्रेक्षिकत्वेन शुक्तौ रजतस्येव जीवे गुणानां वैज्ञानिकसम्बन्धस्यैवाभ्युपगमेन गुणनिरूपितवैज्ञानिकसम्बन्धवानित्यर्थो वाच्य इत्यसाम्मुख्यं । न च मम मते द्रव्यास्तिकपक्षे द्रव्यगुणपदयोरर्थाभेदेन पर्य्यायत्वापत्त्या द्रव्यं गुणो वेत्येकतरनिर्द्धारणानुपपत्तिः, तव मते द्रव्यार्थिकपक्षे गुणस्येव मम मते द्रव्यार्थिकपक्षे द्रव्यगुणयोरभेदस्य वास्तवत्वेऽपि गुणे द्रव्यभेदस्योत्प्रेक्षकस्याङ्गीकारेण तमादाय द्रव्यगुणपदयोः पर्य्यायत्वापत्त्युद्धारसम्भवादित्यपि परेण वक्तुं शक्यमित्याद्यधिकमनेकान्तव्यवस्थायां ॥ १७ ॥

तदेवमुक्तौ द्रव्यार्थिकपर्य्यायार्थिकलक्षणौ मूलनयभेदौ, अनयोर्नैगमादिषु मतभेदेन यथान्तर्भावस्तथाह—

**तार्किकाणां त्रयो भेदा, आद्या द्रव्यार्थतो मताः । सैद्धान्तिकानां चत्वारः, पर्य्यायार्थगताः परे ॥ १८॥**

"तार्किकाणामिति" तार्किकाणां—वादिसिद्धसेनमतानुसारिणां, आद्याः त्रयो भेदाः—नैगमसङ्ग्रहव्यवहारलक्षणाः, द्रव्यार्थतो मताः—द्रव्यमेवार्थं विषयीकृत्याभिप्रेताः, आद्यास्त्रयो भेदास्तार्किकमते द्रव्यार्थिका इति सम्मुखोर्थः, सैद्धान्तिकानां—

जिनभद्रगणिक्षमाश्रमणवचनानुसारिणां चत्वारः—आद्याः ऋजुसूत्रसहिताः द्रव्यार्थिका इति शेषः, परे तु उक्तशेषा उभयेषामपि पर्य्यायार्थगताः—पर्य्यायार्थिका, ऋजुसूत्रादयश्चत्वारः पर्य्यायार्थिका वादिनः, शब्दादयस्त्रय एव च क्षमाश्रमणानामिति निर्गलितोऽर्थः' ऋजुसूत्रो यदि द्रव्यं नाभ्युपेयात्तदा उक्तं "उजुसुयस्स एगे अणुवउत्ते एगं दव्वावस्सयं पुहत्ते णेच्छइ" इति सूत्रं विरुध्येतेति सैद्धान्तिकाः । तार्किकानुसारिणस्तु अतीतानागतपरकीयभेदपृथक्त्वपरित्यागादृजुसूत्रेण स्वकार्य्यसाधकत्वेन स्वकीयवर्तमानवस्तुन एवोपगमान्नास्य तुल्यांशध्रुवांशलक्षणद्रव्याभ्युपगमः, अत एव नाश्यासदुघटितभूतभाविपर्य्यायकारणत्वरूपद्रव्यत्वाभ्युपमोऽप्यध्रुवधर्म्माधारांशद्रव्यमपि नास्य विषयः, शब्दनयेष्वतिप्रसङ्गात् । उक्तसूत्रं त्वनुपयोगांशमादाय वर्तमानावश्यकपर्य्याये द्रव्यपदोपचारात् समाधेयं, पर्यायार्थिकेन मुख्यद्रव्यपदार्थस्यैव प्रतिक्षेपात् । यदि चैवमप्येकानुपयुक्त एकं द्रव्यावश्यकमित्यत्रानुपयोगस्य विषयनियन्त्रितत्वेनार्थैक्यादुद्देश्यविधेयभावानुपपत्तिरिति विभाव्यते, यथा द्रव्यावश्यकपदं द्रव्यावश्यकत्वेन व्यवहर्तव्यं, परं विवरणपरतया चैतत् योजनीयमिति न कश्चिद्दोष इत्यालोचयामः ॥ १८ ॥ उक्तानुभयनयभेदानेव विशिष्य लक्षयितुं नामग्राहं सङ्गृह्णामि—

**नैगमः सङ्ग्रहश्चैव व्यवहारर्जुसूत्रकौ । शब्दः समभिरूढाख्य एवम्भूतश्च सप्त ते ॥ १९ ॥**

नैगम इति स्पष्टः, ते मूलनयप्रभेदाः ॥ १९ ॥ तत्रादौ नैगमलक्षणमाह—

**निगमेषु भवो बोधो, नैगमस्तत्र कीर्तितः । तद्भवत्वं पुनर्लोकप्रसिद्धार्थोपगन्तृता ॥ २० ॥**

---

१ "माभास"इतिमूलप्रतिषु "मात्रस"इति नयरहस्ये.

“निगमेष्विति” निगमेषु—लोकेषु भवो बोधो नैगमनयः, तत्र तेषु मध्ये कीर्तितः, तद्भवत्वं च तदाश्रयेणोत्पत्तिकत्वं, ज्ञानरूपस्य नयस्यात्मन्येव शब्दरूपस्य च भाषावर्गणायामेवोत्पत्तेः, किन्तु लोकप्रसिद्धार्थोपगन्तृता लोकप्रसिद्धार्थकस्वीकर्तृत्वं पारिभाषिकं तदित्यर्थः ॥ २० ॥

**तत्प्रसिद्धिश्च सामान्यविशेषाद्युभयाश्रया । तदन्यतरसन्न्यासे व्यवहारो हि दुर्घटः ॥ २१ ॥**

तत्प्रसिद्धिश्च—लोकप्रसिद्धिश्च, सामान्यविशेषाद्युभयाश्रया—सामान्यविशेषनित्यानित्यत्वभेदाभेदाद्युभयावलम्बिनी, हि यतः तेषां मध्ये अन्यतरस्य एकस्यापि सन्न्यासे—परित्यागे व्यवहारो दुर्घटः, सामान्याद्यभावे अनुगतप्रतीत्यादेः, विशेषाद्यभावे च व्यावृत्त्यादिबुध्यादेरसम्भवादित्यर्थः । तथा च सामान्यविशेषोभयस्वीकर्तृजातीयैकदेशबोधत्वं नैगमत्वमिति लक्षणं लब्धं । अथानेन स्वतन्त्रसामान्यविशेषोभयाभ्युपगमे कणादवद्दुर्नयत्वं शबलतदभ्युपगमे च प्रमाणत्वमेव यथास्थानं प्रत्येकं गौणमुख्यभावेन तदुपगमे च सङ्ग्रहव्यवहारान्यतरप्रवेशः स्यादिति चेत् ? न, तृतीयपक्षाश्रयणे दोषाभावात्, क्वचित्सङ्ग्रहव्यवहारसमानविषयत्वेऽपि क्वचिदेकस्य सत उभयग्रहणोपयोगव्यावृत्तत्वेन तदतिरेकात्, अत एव न संयोगेनान्यथासिद्धिः, प्रत्येकविषयताद्वयातिरिक्तस्वतन्त्रविषयताकत्वादिति दिक् ॥ २१ ॥ सङ्ग्रहं लक्षयति—

**सङ्ग्रहः सङ्गृहीतस्य पिण्डितस्य च निश्चयः । सङ्गृहीतं परा जातिः पिण्डितं त्वपरा स्मृता ॥ २२ ॥**

“सङ्ग्रह इति” सङ्गृहीतस्य पिण्डितस्य च निश्चयः सङ्ग्रहः, तत्र सङ्गृहीतं परा—सर्वव्यापिका जातिः—सत्ताख्यमहासामा-

न्यमिति यावत्, पिण्डितं त्वपरा–देशव्यापिकाजातिः द्रव्यत्वादिसामान्यमिति यावत्, यद्यप्येतदुभयग्राहित्वं प्रत्येकग्राहिण्यव्याप्तं प्रत्येकग्राहित्वं चाननुगतं तथापि सामान्यमात्राभ्युपगमप्रवणैकदेशबोधत्वं सङ्ग्रहनयत्वमिति लक्षणं बोध्यं "संगहियपिण्डिअत्थं संगहवयणं समासओ विंति" त्ति सूत्रस्वारस्याच्चेत्थमुक्तिः । यद्वा ( नैगमाद्युपगतार्थसङ्ग्रहप्रवणोऽध्यवसायविशेषः सङ्ग्रहः, सामान्यनैगमवारणाय ) नैगमाद्युपगतार्थपदं, सङ्ग्रहश्च विशेषविनिर्मोकोऽशुद्धविषयविनिर्मोकश्चेत्यादिर्यथासम्भवमुपादेयस्तेन न प्रस्थकस्थले सामान्यविधेरसङ्ग्रहात्तत्स्थलप्रदर्शितसङ्ग्रहनयेऽव्याप्तिरित्यादिकं बोध्यं । "अर्थानां सर्वैकदेशसङ्ग्रहणं सङ्ग्रहः" इति तत्त्वार्थभाष्यं अत्र सर्वं सामान्यम् एकदेशश्च विशेषस्तयोः सङ्ग्रहणं सामान्यैकदेशस्वीकार इत्यर्थः, अयं हि घटादीनां भवनानर्थान्तरत्वाद्भावांश एव च प्रत्यक्षादिप्रमाणप्रवृत्तेस्तन्मात्रत्वमेव स्वीकुरुते । घटादिविशेषविकल्पस्त्वविद्योपजनित एवेति मन्यते, अतद्व्यावृत्तिव्यवहारोऽप्यस्य प्रतियोगिसापेक्षत्वेन कल्पनामूल एव अयं चाशुद्धसङ्ग्रहविषयः, एवं तदवान्तरभेदास्तु यत् यत्सामान्यान्तर्भावेन विधिव्यवहारं प्रवर्तयन्ति तत्तत्सामान्यैकदेशस्वीकारिणो द्रष्टव्याः । तादृशतादृशसङ्ग्रहनयविचारे च तत्तदवान्तरधर्म्माकारश्रुतिनिश्रितं मतिज्ञानमपि जायत एव "रूपविशेषवान्मणिः पद्मराग" इत्युपदेशार्थप्रतिसन्धानानन्तरं चाक्षुषोपयोगे पद्मरागाकारमिव प्रत्यक्षमिति कार्य्यविशेषादपि तद्विशेष इति दिक् ॥ २२ ॥ सङ्ग्रहावान्तरभेदैरेव सङ्ग्रहार्थ[व्यवहार]भेदमुपदर्शयति—

एकद्वित्रिचतुःपञ्चषड्भेदा जीवगोचराः । भेदाभ्यामस्य सामान्यविशेषाभ्यामुदीरिताः ॥ २३ ॥

"एकेति" चेतनत्वेन जीव एकः, त्रसस्थावरत्वाभ्यां द्विविधः, पुंवदेस्त्रीवेदनपुंसकवेदैस्त्रिविधः ३ देवमनुष्यतिर्यङ्नारकगतिभेदैश्चतुर्विधः, एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियभेदात्पञ्चविधः, पृथ्वीकायाप्कायतेजस्कायवायुकायवनस्पतिकायत्रसकायभेदात्षड्विधः, इत्येवं ये जीवगोचराः सङ्ग्रहप्रकारा उदीरिताः सिद्धान्ते तेऽस्य सङ्ग्रहनयस्य सामान्यविशेषाभ्यां—सामान्यसङ्ग्रहविशेषसङ्ग्रहलक्षणाभ्यां भेदाभ्यामवगन्तव्याः ॥ २३ ॥ नैगमव्यवहारयोरपेक्षया यथास्य शुद्धत्वं तथाह—

उपचारा विशेषाश्च, नैगमव्यवहारयोः । इष्टा ह्यनेन नेष्यन्ते, शुद्धार्थपक्षपातिना ॥ २४ ॥

"उपचारा" इति उपचारा—गौणव्यवहारा, विशेषाश्च—तत्तद्व्यावृत्तिरूपा नैगमव्यवहारयोः इष्टा शुद्धार्थपक्षपातिना एतदुभयापेक्षया स्वविषयोत्कर्षाभिमानिना, हि—निश्चितं, अनेन—सङ्ग्रहनयेन नेष्यन्ते, तथा च नैगमव्यवहारसम्मतोपचारविशेषानवलम्बित्वादस्य शुद्धत्वं स्वसमवायोचितोपचारविशेषयोः क्वचिदवलम्बनेनापि नापोद्यत इति भावः ॥ २४ ॥

व्यवहारं लक्षयति—

उपचारेण बहुलो विस्तृतार्थश्च लौकिकः । यो बोधो व्यवहाराख्यो नयोऽयं लक्षितो बुधैः ॥ २५ ॥

"उपचारेण" इति उपचारेण—गौण्या वृत्या, बहुलो—बाहुल्येन व्यवहारकारी, विस्तृतार्थो—नानाव्यक्तिकशब्दसङ्केतग्रहण-

प्रवणः लौकिकः-शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणपक्षपाती यो बोधः सोऽयं व्यवहाराख्यो नयः बुधैर्लक्षितः, उपचारबहुलाद्यध्यवसायवृत्तिनयत्वव्याप्यजातिमत्त्वं लक्षणं तेन नाननुगम इत्यर्थः । "लौकिकसम उपचारप्रायो विस्तृतोऽर्थो व्यवहारः" इति तत्त्वार्थभाष्यमनुरुध्य इत्थं लक्षितं "वच्चइ विणिच्छिअत्थं व्यवहारो सवदवेसु त्ति" निर्युक्तिप्रतीकपर्य्यालोचनायां तु विनिश्चितार्थप्रापकत्वमस्य लक्षणं लभ्यते, विनिश्चितार्थप्राप्तिश्चास्य सामान्यानभ्युपगमे सति विशेषाभ्युपगमात्, अत एव विशेषेणावह्रीयते निराक्रियते सामान्यमनेनेति निरुक्त्युपपत्तिः, जलाहरणाद्युपयोगिनो घटादिविशेषानेवायमङ्गीकरोति, नतु सामान्यं तस्यार्थक्रियाऽहेतुत्वात्, नहि 'गां वधान' इत्युक्ते कश्चिद्गोत्वं बद्धुमध्यवस्यति, अनुगतव्यवहारश्चान्यापोहादिनाप्युपपत्स्यते अखण्डाभावनिवेशाच्च नान्योन्याश्रयः, अस्तु वा सर्वत्र शब्दानुगमादेवानुगतत्वव्यवहारः कारणत्वव्याप्त्यादावित्थमेवाभ्युपगमादित्यादिकं प्रपञ्चितमन्यत्र ॥ २५ ॥ उपचारबाहुल्यं विवृणोति—

दह्यते गिरिरध्वाऽसौ, याति श्रवति कुण्डिका । इत्यादिरुपचारोऽस्मिन्, बाहुल्येनोपलभ्यते ॥ २६ ॥

"दह्यत" इति असौ गिरिर्दह्यते अत्र गिरिपदस्य गिरिस्थतृणादौ लक्षणा, भूयो दग्धत्वप्रतीतिः प्रयोजनं, असावध्वा याति अत्राध्वपदस्याध्वनि गच्छति पुरुषसमुदाये लक्षणा, नैरन्तर्यप्रतीतिः प्रयोजनं । कुण्डिका श्रवतीत्यत्र कुण्डिकापदस्य कुण्डिकास्थजले लक्षणा, निविडत्वप्रतीतिः प्रयोजनं । सर्वत्रोद्देश्यप्रतीतिर्लक्ष्यार्थे मुख्यार्थाभेदाध्यवसायात्मकव्य-

ज्ञनामहिम्ना व्युत्पत्तिमहिम्ना वेति विवेचितमन्यत्रेत्यादिरुपचारः गौणः, अस्मिन्—व्यवहारनये बाहुल्येनेतरनयापेक्षया भूम्नोपलभ्यते ॥ २६ ॥ विस्तृतार्थं विवृणोति ॥

**विस्तृतार्थो विशेषस्य प्राधान्यादेष लौकिकः । पञ्चवर्णादिभृङ्गादौ श्यामत्वादिविनिश्चयात् ॥ २७ ॥**

"विस्तृतार्थ" इति विशेषस्य प्राधान्यादेष विस्तृतार्थः, तत्प्राधान्यं च व्यक्तिष्वेवोपयुक्ततया सङ्केताश्रयणादिना बोध्यं, तथा वस्तुतः पञ्चवर्णावयवारब्धशरीरत्वेन पञ्चवर्णादिमति भृङ्गादौ श्यामत्वादेरेव विनिश्चयादेष लौकिकः, यथा हि लोको निश्चयतः पञ्चवर्णेऽपि भ्रमरे कृष्णवर्णत्वमेवाङ्गीकरोति तथायमपीत्यस्य लौकिकसमत्वमिति नयविदः । न च कृष्णो भ्रमर इत्यत्र विद्यमानेतरवर्णप्रतिषेधाक्रान्तत्वं, अनुद्भूतत्वेनेतराविवक्षणात्तद्व्युदासेऽतात्पर्य्यात्, उद्भूतवर्णविवक्षाया एवाभिलापादिव्यवहारहेतुत्वात् कृष्णादिपदस्योद्भूतकृष्णादिपरत्वाद्वा, अतात्पर्यज्ञं प्रत्येतस्याबोधत्वेनाप्रामाण्येऽपि तात्पर्यज्ञं प्रति प्रामाण्याल्लोकव्यवहारानुकूलविवक्षाप्रयुक्तत्वेन च भावसत्यत्वाविरोधात्, अत एव पीतो भ्रमर इति न व्यवहारतो भावसत्यं, लोकव्यवहाराननुकूलत्वात्, नापि निश्चयतः, पञ्चवर्णपर्य्याप्तिमति पञ्चवर्णप्रकारत्वाभावेनावधारणाक्षमत्वादित्यसत्यमेवेति दिक् ॥ २७ ॥

ननु कृष्णो भ्रमर इति वाक्यवत्पञ्चवर्णो भ्रमर इति वाक्यमपि कथं न व्यवहारनयानुरोधि, तस्यापि लोकव्यवहारानुकूलत्वात्, आगमबोधितार्थेऽपि व्युत्पन्नलोकस्य व्यवहारदर्शनात्, लोकबाधितार्थबोधकवाक्यस्याव्यवहारकत्वे च आत्मा न रूपवानित्यादिवाक्यस्याप्यव्यवहारकत्वापातात्तस्याप्यात्मगौरवत्वादिबोधकलोकप्रमाणबाधितार्थबोधकत्वात्,

अभ्रान्तलोकाबाधितार्थबोधकत्वं चोभयत्र तुल्यं । प्रत्यक्षनियतैव व्यवहारिविषयता नत्वागमादिनियतेति तु व्यवहार-
दुर्नयस्य चार्वाकमतप्रवर्तकस्य मतं, नतु व्यवहारनयस्य जैनदर्शनस्पर्शिन इति शङ्कायामाह—

**पञ्चवर्णाभिलापेऽपि श्रुतव्युत्पत्तिशालिनां । न तद्बोधे विषयता परांशे व्यावहारिकी ॥ २८ ॥**

"पञ्चेति" पञ्चवर्णो भ्रमर इति शब्दाभिलापेऽपि श्रुतव्युत्पत्तिशालिनां—तत्तन्नयाभिप्रायप्रयुक्तः शब्दः तत्र नयी-
यविषयतयैव शाब्दबोधक इति सिद्धान्तसिद्धकार्य्यकारणभावग्रहवतां तद्बोधे—उक्ताभिलापजन्यशाब्दबोधे, परांशे
कृष्णेतरवर्णांशे व्यावहारिकी विषयता नास्ति, तथा च पञ्चवर्णो भ्रमरः इति शाब्दबोधे कृष्णांशे व्यावहारिक्या सम्बलिता
इतरांशे च शुद्धा नैश्चयिकी विषयता, अदृष्टार्थे सर्वत्र सम्बलनसम्भवेऽपि लोकप्रसिद्धार्थानुवादस्थले क्वचिदेव सम्बल-
नाभ्युपगमादिति न कश्चिद्दोष इति भावनीयं ॥ २८ ॥ ऋजुसूत्रं लक्षयति—

**भावत्वे वर्तमानत्वव्याप्तिधीरविशेषिता । ऋजुसूत्रः श्रुतः सूत्रे शब्दार्थस्तु विशेषितः ॥ २९ ॥**

"भावत्व" इति भावत्वे वर्तमानत्वव्याप्तिधीः—अतीतानागतसम्बन्धाभावव्याप्यत्वोपगन्तृता, अविशेषिता—शब्दाद्यभि-
मतविशेषापक्षपातिनी, सूत्रे ऋजुसूत्रनयः श्रुतः, सूत्रं च "पच्चुप्पण्णग्गाही उज्जुसुओणयविही मुणेयव्वो त्ति" अत्र प्रत्युत्प-
न्नमेव गृह्णातीत्येवं शील इत्यत्रार्थे तात्पर्य्यादुक्तार्थलाभः, अविशेषितपदकृत्यमाह शब्दार्थस्तु विशेषित इति तथा च विशे-
षितार्थग्राहिणि शब्दादिनये नातिव्याप्तिरिति भावः, "सतां साम्प्रतानामर्थानामभिधानपरिज्ञानमृजुसूत्रः" इति तत्त्वार्थ-

भाष्यं व्यवहारातिशायित्वलक्षणमभिप्रेत्य तदतिशयप्रतिपादनार्थमेतदुक्तं, व्यवहारो हि सामान्यं व्यवहारानङ्गत्वान्न सहते, कथं तर्ह्यर्थमपि परकीयमतीतमनागतं च, अभिधानमपि तथाविधार्थवाचकं, ज्ञानमपि च तथाविधार्थविषयं, अविचार्य्य सहेत इत्यस्याभिमानः, न चायं वृथाभिमानः, स्वदेशकालयोरेव सत्ताविश्रामात्, यथाकथञ्चित्सम्बन्धस्य सत्ताव्यवहाराङ्गत्वेऽतिप्रसङ्गात्, नच देशकालयोः सत्त्वं विहायान्यदतिरिक्तं सत्त्वमस्ति, ततःयोग्यता प्रकृते स्यादसत्ताबोधोऽपि चात्र, तत्र खरश्रृङ्गादाविव सत्ताप्रतिक्षेऽपि विकल्पसिद्धेऽपि धर्म्मिणि निषेधप्रवृत्तेस्तत्र तत्र व्यवस्थापितत्वादिति दिक्॥२९॥

अन्यमत्र विशेषमाह—

**इष्यतेऽनेन नैकत्रावस्थान्तरसमागमः । क्रियानिष्ठाभिदाधारद्रव्याभावाद्यथोच्यते ॥ ३० ॥**

"इष्यत" इति अनेन–ऋसूत्रनयेन, एकत्र–धर्म्मिणि, अवस्थान्तरसमागमः–भिन्नावस्थावाचकपदार्थान्वयः, नेष्यते–न स्वीक्रियते, कुतः क्रिया–साध्यावस्था, निष्ठा–च सिद्धावस्था, तयोर्या भिदा–भिन्नकालसम्बन्धः, तदाधारस्यैकद्रव्यस्याभावात्, अत्रार्थेऽभियुक्तसम्मतिमाह यथोच्यते अभियुक्तैः ॥ ३० ॥

**पलालं न दहत्यग्निर्भिद्यते न घटः क्वचित् । नासंयतः प्रव्रजति भव्योऽसिद्धो न सिध्यति ॥ ३१ ॥**

"पलालमिति" अत्र दहनादिक्रियाकाल एव तन्निष्ठाकाल इति दह्यमानादेर्दग्धत्वाद्यव्यभिचारात्तदवस्थाविलक्षणपलालाद्यवस्थावच्छिन्नेन समं दहनादिक्रियान्वयस्यायोग्यत्वात्, पलालं न दहत्यग्निरित्यादयो व्यवहारा निषेधमुखा उपपद्यन्ते, विधि

मुखस्तु व्यवहारोऽत्रापलालं दह्यते, अघटो भिद्यते, संयतः प्रव्रजति, सिद्धः सिध्यति इत्येवमाकार एव द्रष्टव्यः, अत एव "सो समणो पव्वईओ" इति ( सूत्रमपि सङ्गच्छते नन्वेतत् ) नये कृतकरणापरिसमाप्तिः, सिद्धस्यापि साधने करणव्यापारानुपरमा- दिति चेत् ? न, कार्य्यमुत्पाद्य क्रियोपरमेण तत्समाप्तेः, नच यादृशव्यापारवतां दण्डादीनां पूर्वं सत्त्वं तादृशानामेव तेषां कचित् घटोत्पत्त्यनन्तरमपि सम्भवे तदा तदुत्पत्तिप्रसङ्गः इति वाच्यं, तत्सत्त्वेऽपि सूक्ष्मक्रियाविगमकल्पनात्, नच तत्कि- याया घटोत्पत्तेः प्राक् सत्त्वे तदापि तदुत्पत्तिप्रसङ्गोऽसत्त्वे च कार्य्याव्यवहितपूर्ववृत्तित्वाभावेनाकारणत्वाऽपत्तिरिति वाच्यं, कार्य्यव्याप्यतावच्छेदकपरिणामविशेषरूपायाः कारणतायाः कार्य्यसहवृत्तितानियमात्, अत एव कुर्वद्रूपत्वमप्रामाणिकं बीजत्वादिना साङ्कर्य्याज्जातिरूपतदसिद्धेरिति निरस्तं । अथैवं चक्रभ्रमणाद्युपलक्षितदीर्घक्रियाकाले कुतो न दृश्यते घटः यदि क्रियमाणः कृत एवेति चेत् ? न, घटजननव्यापाररूपायाः क्रियाया दीर्घकालत्वासिद्धेः, चरमसमय एव तदभ्यु- पगमात्, घटगताभिलापोत्कर्षवशादेव मृन्मर्दनाद्यान्तरालिककार्य्यकरणवेलायां घटं करोमीति व्यवहारात् । तदुक्तं महा- भाष्यकृता "पइसमयकज्जकोडी, निरवेक्खो घडगयाहिलासो सि । पइसमयकज्जकोडिं थूलमइ घडं मिलाएसि ॥१॥" इति कृतस्यैव करणे क्रियावैफल्यमित्यपि न रमणीयं, क्रिययैव निष्ठां जनयित्वा कार्य्यस्य कृतत्वोपपादनात्, कृतमेव क्रिया जन- यति, नाकृतं, असत्त्वात्, क्रियाजनितत्वाच्च कृतमित्यन्योन्याश्रय इति चेत् ? न, घटत्वादिनैव घटादिक्रियाजन्यत्वात् तत्र कृतत्वाप्रवेशादर्थादेव समाजात् कृतत्वोपपत्तेः, यदि च क्रियमाणं न कृतं, तदा क्रियासमये कार्य्याभावात् ततः पूर्वं ततः पश्चाच्च कारणाभावात्तत्कार्य्यं न भवेदेव, सामग्र्यास्तदुत्तरसमय एव कार्य्यव्याप्यत्वोपगमान्न दोष इति चेत् ?

न, सामग्रीसमयस्यैव कार्य्यव्याप्यत्वोपगमौचित्यात्, अन्यथा व्यवहितोत्तरकालेऽपि कार्य्योत्पत्तिप्रसङ्गात्, अव्यवहितोत्तरत्वप्रवेशे गौरवात्, द्वित्रिक्षणादिव्यवधानाभावनिवेशे विनिगमकाभावात् कारणाभावस्यैव कार्य्याभावव्याप्यत्वेन कारणोत्तरकालेऽपि कार्य्यासिद्धेश्च । ननु पर्य्यायनयविचारे कार्य्यक्षणेषु कारणक्षणानामव्यवहितपूर्ववर्तितयैव हेतुत्वमुक्तं तत्कथमिह पर्य्यायप्रकृतिकशुद्धर्जुसूत्रनयविचारे क्रियमाणं कृतमेवेत्यस्योपपादनाय तेषां कार्य्यसहवर्तितयैव हेतुत्वं वदतां न पूर्वापरविरोध इति चेत् ? सत्यं, तत्र पूर्वक्षणानामुत्तरोत्तरक्षणहेतुत्वस्य विवक्षितस्य पौर्वापर्य्यनियमेनैवोपपत्तेः, अत्र तु व्यवहारोपगृहीतं घटादिकिञ्चित्कालस्थायिकार्य्यमादाय तत्र क्रियाजन्यत्वं शुद्धर्जुसूत्रनयेन विचार्य्यत इति कार्य्यसहवर्तितयैव तद्धेतुत्वकल्पनाद्विरोधगन्धस्याप्यभावात्, अत एव यत्र शुद्धपर्य्यायाणां कार्य्यकारणभावश्चिन्त्यते यथा केवलदर्शनावधिकक्षणेषु केवलज्ञानावधिकक्षणानां, तत्र पौर्वापर्यगर्भ एव हेतुहेतुमद्भावो, नतु कार्य्यसहवर्तितयैव, सर्वक्षणानामेकक्षणैकशेषताप्रसङ्गादिति सुदृढमवधारणीयं । अथ क्रियमाणमित्यत्र वर्तमानत्वमानशोऽर्थः, कृतमित्यत्र चातीतत्वं निष्ठार्थः, तत्र वर्तमानत्वं विद्यमानकालवर्तित्वं, अतीतत्वं च विद्यमानध्वंसप्रतियोगिकालवृत्तित्वं, विद्यमानत्वं च तत्तत्प्रयोगाधारत्वं, प्रयोगत्वं च तत्तदर्थोपस्थित्यनुकूलव्यापारत्वं लिप्युच्चारणादिसाधारणं तदादेर्बुद्धिस्थत्ववल्लडादेः शक्यतावच्छेदक(कं)तत्तत्कालानुगमकं,तच्च वर्तमानत्वमतीतत्वं वा धात्वर्थेऽन्वेति, धातूत्तरप्रत्ययजन्यकालप्रकारकबोधे समानविशेष्यत्वप्रत्यासत्त्या धातुजन्योपस्थितेर्हेतुत्वात्, अत एव नातीतघटज्ञानाश्रये घटं जानामीति प्रयोगप्रसङ्गः, नचैवमारम्भसमये पचतीति प्रयोगो न स्यात्तदा कार्या(पाका)भावादिति वाच्यं, स्थूलकालमादाय तत् समाधानात्, तस्मात्क्रियमाणं कृत-

ऋजुसूत्रनयक्रियमाणं कृतमितिप्रयोगसिद्धिः

मित्यत्रान्वयस्यैवानुपपत्तिरिति चेत्? न, स्थूलव्यवहारव्युत्पत्तेरन्यापोहशब्दार्थवादिना निश्चयेनानादरणात्, अन्यथारम्भकाल इव तत्पूर्वकालेऽप्येकस्थूलकालसम्भवेन पचतीति प्रयोगप्रसङ्गात्, नच व्यवहारमात्रात् वस्तुसिद्धिरपि, अन्यथा पुरुषो व्याघ्र इति प्रयोगात्पुरुषस्यापि व्याघ्रत्वप्रसङ्गात्। किञ्चैवं नष्टो घटो नश्यन् घट इत्यादिप्रयोगव्यवस्थायां तव का गतिः नाशस्योक्तातीतत्वायोगात्, नष्टेऽपि घटे विद्यमाननाशप्रतियोगित्वाच्च, अथ तत्रातीतत्वं वर्तमानत्वं च कृत्प्रत्ययार्थोत्पत्तावेवान्वेतीति न दोष इति चेत्? न, उक्तनियमभङ्गप्रसङ्गात्, धातुत्वप्रत्ययत्वादेर्नानात्वात्तन्नियमस्य विशिष्य विश्रान्तिरिति चेत्? न, अन्ततो धातुपदत्वादिनापि तदनुगमस्य कर्तुं शक्यत्वात्, अथान्यत्राऽप्येकपदोपात्तत्वप्रत्यासत्त्या कृत्यादिस्वार्थ एव प्रत्ययार्थकालान्वयः, व्युत्पत्तिवैचित्र्यात्, नच पचत्यपि भाविकृतिप्रागभावमाद्यकृतिध्वंसं चादाय पक्ष्यत्यपाक्षीदिति प्रयोगप्रसङ्ग इति वाच्यं, आद्यकृतिप्रागभावचरमकृतिध्वंसयोर्भविष्यदतीतप्रत्ययार्थत्वादिति नोक्तदोष इति चेत्? न, 'जानाति' इत्यादौ धात्वर्थ एव प्रत्ययार्थकालान्वयदर्शनात्, अस्तु वा तथापि कृत्प्रत्ययार्थोत्पत्तेः प्रातिपदिकार्थे घटे कथमन्वयोऽयोग्यत्वात्, परम्परासम्बन्धेन तत्र तदन्वयोपपत्तिरिति चेत्? न, विद्यमानघटे न नष्टो घट इति प्रयोगानापत्तेः, वृत्त्यनियामकस्य सम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वात्, उत्पत्तेः धात्वर्थे तस्य च प्रातिपदिकार्थेऽन्वयाच्च दोष इति चेत्? न, नामार्थधात्वर्थयोः साक्षाद्भेदसम्बन्धेनान्वयायोगात्, अन्यथा तण्डुलं पचतीत्यत्रापि कर्मत्वसंसर्गेण प्रातिपदिकार्थस्य धात्वर्थेऽन्वयप्रसङ्गात्, अभेदेन निपातान्यनामार्थप्रकारकबोधे समान-

१ पदत्वादि ।    २ यथो ।

(विशेष्यत्वप्रत्यासत्त्या निपातप्रत्ययान्यतरजन्योपस्थितेर्हेतुत्वात्, नामार्थप्रकारकधात्वर्थे) विशेष्यकबोधासम्भवेऽपि धात्वर्थप्रकारकनामार्थविशेष्यकबोधः प्रकृतेऽनपाय एवेति चेत्? न, चैत्रः पाकः इत्यादौ कर्तृत्वादिसंसर्गेण पाकादेश्चैत्रादावन्वयाबोधाय धात्वर्थप्रकारकबोधेऽपि निपातप्रत्ययान्यतरजन्योपस्थितेर्हेतुत्वान्तरकल्पनावश्यकत्वात्, स्यादेतदत्र नश्धातोः प्रतियोगिनि लक्षणया अभेदेनैवास्तु प्रातिपदिकार्थेन सममन्वयः, एकदेशे नाशे कृत्प्रत्ययार्थोत्पत्तेरन्वयश्च व्युत्पत्तिवैचित्र्यात्, नच धात्वर्थस्याख्याताद्यर्थ एवान्वयनियमात्कथमेवमिति वाच्यं, शक्त्यैव धात्वर्थप्रकारकबोधे आख्यातादिजन्योपस्थितेर्हेतुत्वात्, अत एव "जानाति" इत्यादौ "ज्ञा" धातोर्ज्ञानवति लक्षणया प्रातिपदिकार्थेनान्वयसम्भवे आख्यातार्थोऽयोग्यत्वान्न भासते इति चिन्तामणिकृदुक्तं युक्तं, अनया भङ्ग्या धातोः परम्परया मुख्यार्थबाधप्रदर्शनेन तल्लक्षणासूचनस्यैवाभिप्रेतत्वात्, एवं हि निरूपितत्वसम्बन्धेन ज्ञानप्रकारकाश्रयत्वविशेष्यकावान्तरशाब्दबोधे तद्धेतुत्वादिगौरवं निरस्तं भवति। न च सामान्यतो हेतुत्वं क्लृप्तमेवेति क्व गौरवमिति वाच्यं, तथापि तत्तदाकाङ्क्षाज्ञानादिहेतुताकल्पने गौरवादिति मैवम्, तथा सति 'जानाति' इत्यत्राख्यातार्थसङ्ख्यानन्वयप्रसङ्गात् भावनान्वयिन्येवाख्यातार्थसङ्ख्यान्वयात्, अथाख्यातार्थसङ्ख्यान्वये भावनाविशेष्यत्वं न तन्त्रं, किन्तु प्रथमान्तपदोपस्थाप्यत्वमेवेति न दोष इति चेत्? न, धात्वर्थप्रकारकबोधसामान्य एवाख्यातादिजन्योपस्थितेर्हेतुत्वात्, शक्त्येति प्रवेशे गौरवात्, प्रजयतीत्यादावनन्वयप्रसङ्गाच्च, पाकोऽयमित्यादौ च स्तोकं पचति स्तोकः (पाकः) इति प्रयोगयोर्विशेषाय घञादीनां धात्वर्थतावच्छेदकविशिष्टे शक्तिस्वीकारात् न दोष इति दिक्। तदेवं नैयायिकोक्तव्युत्पत्तौ तन्नीत्यैवातिप्रसङ्गस्य दर्शितत्वात् ज्ञानोत्पत्ति-

ऋजुसूत्रनयेक्रियमाणं कृतमितिप्रयोगसिद्धिः

काले नाशोत्पत्तिकालेऽपि च ज्ञातो घटो नष्टो घट इति व्यवहारात्, क्रियाकालेऽपि निष्ठार्थाविरोधात् तत् 'क्रियमाणं कृतम्'
श्रत्यन्वयो नानुपपन्नः, सर्वत्र कालवर्तिताविशेषरूपसिद्धत्वस्य निष्ठार्थत्वात्, तस्य चादिसमवायावच्छेदेन साध्यत्वेन
सममविरोधात्, चिरनष्टे इदानीं नष्ट इति चिरोत्पन्ने चेदानीमुत्पन्न इति च प्रतीतिः, समभिव्याहारविशेषादेतत्कालावच्छि-
न्नसाध्यत्वविशिष्टसिद्धत्वोपस्थित्यैव न भविष्यति, इत्थमेव क्रियमाणं कृतमेव कृतं च क्रियमाणत्वेन भजनीयमिति सिद्धान्तः
सङ्गच्छते। सिद्धत्वविशिष्टसाध्यतायाः सिद्धत्वनियतत्वाच्छुद्धसिद्धतायाश्च विशिष्टसाध्यताऽनियतत्वात्, तदाह भाष्य-
कारः "तेणेह कज्जमाणं नियमेण कयं कयं तु भयणिज्जं। किंचिदिह कज्जमाणं उवरयकिरियं व होज्जाहि ॥ १ ॥" इति
अस्तु वा विपरिणामस्वरूपनिष्पत्त्यादिरूपाननुगतैव (निष्ठा, समभिव्याहारविशेषादेव बोधविशेषोपपत्तेः, परमुक्तयुक्तेः
क्रिया कालो (नयरहस्यतः) निष्ठाकालं न विरुणद्धीति किमतिविस्तरेण ? ॥३१॥ ननु यद्येवं कारणव्यापारचरमक्षण एव
क्रियाकालो निष्ठाकालश्च भाष्यकृता निर्णीतस्तदा शाट्येकदेशे दह्यमाने शाटी दग्धेति वचनं कथं भगवदुक्तर्जु-
सूत्रानुवादेन समर्थितं ?, तदानीं शाटीदाहक्रियाकालसंवलितस्य तन्निष्ठाकालस्याभावादिति जिज्ञासायामाह—

दह्यमानेऽपि शाट्येकदेशे स्कन्धोपचारतः। शाटी दग्धेति वचनं ज्ञेयमेतन्नयाश्रयम् ॥ ३२ ॥

"दह्यमानेऽपी"ति शाट्येकदेशे दह्यमानेऽपि तत्र स्कन्धोपचारतः—शाटीस्कन्धवाचकशाटीपदोपचाराच्छाटी दग्धेति
वचनमेतन्नयाश्रयम्—ऋजुसूत्राभिप्रायकं ज्ञेयं, तदाह भाष्यकारः "उज्जुसुअणयमयाओ वीरजिणंदवयणावलंबीणं। जुज्जेज्ज
उज्झमाणं डड्ढं वोत्तुं न तुझ त्ति॥१॥जमालिमतव्युद्ग्राहितां प्रियदर्शनां प्रति भगवद्वचनवासितचेतसो ढंकारस्योक्तिरियं तथा

चात्रोपचारमूलव्यवहारनयोपगृहीतस्यर्जुसूत्रनयस्य प्रवृत्तिरित्युक्तं भवति। इदं तु ध्येयम्, एवं सति दीर्घः क्रियाकालः आंशिककार्य्यक्षणकोटिविषयोऽभ्युपगन्तव्यः, तत्र च यद्यपि कारणक्षणस्य पूर्ववर्तितयैव व्यापारात् क्रियाकालनिष्ठाकालयोर्भेद एव व्यवहारनयसम्मत आपतति, तथापि "भूतिर्येषां क्रिया सैवे"त्याश्रयणादुत्पत्तिरूपक्रियायास्तन्निष्ठायाश्च यौगपद्यमविरुद्धमिति "कज्जमाणे कडे" त्ति भगवद्वचनं तूत्पादादीनामेकधर्म्मिसंसर्गितया त्रैकाल्यविषयत्वेन प्रमाणार्थकतया व्याख्येयम्, तथाहि—आद्यतन्तुप्रवेशक्रियासमये पटद्रव्यं यदि तेन रूपेण नोत्पन्नं तर्ह्युत्तरत्रापि नोत्पन्नमित्यन्ता(न्तेऽप्य)नुत्पन्नं स्यादुत्पन्नांशेनैव चोत्पत्तौ फलान्तराभावप्रसङ्गः इत्यादित एव प्रबन्धेनोत्पद्यमानं तद्रूपतयोत्पन्नमभिप्रेतरूपतया चोत्पत्स्यते, एवमुत्पन्नमप्युत्पद्यमानमुत्पत्स्यमानं च, तथोत्पत्स्यमानमप्युत्पद्यमानमुत्पन्नं चेत्येकैकं त्रैकाल्यं प्रतिपद्यते, एवं विगच्छदादिकालत्रयेणाप्युत्पद्यमानादिरेकैकस्त्रैकाल्यं प्रतिपद्यते, यदैवोत्पद्यमानं तदैव विगतं विगच्छद्विगमिष्यच्चेत्यादिरीत्या, (एवं विगमोऽपि त्रिकाल उत्पादादिना दर्शनीयः (सम्मतिवृत्तितः) एवं स्थित्यापि त्रिकाल एव सप्रपञ्चकं, एवं स्थितिरप्युत्पादविनाशाभ्यां सप्रपञ्चाभ्यां त्रिकालस्पर्शिनी प्रदर्शिनीयेति सर्वैरेभिः धर्मैः त्रिकालस्पर्शिभिरविनाभूतं द्रव्यं प्रतिपादयद्वाक्यं प्रमाणमेवेति तदिदमाह **सम्मतिकारः** "उप्पज्जमाणकालं उप्पन्नं ति विगयं विगच्छंतं। दवियं पण्णवयंतो तिकालविसयं विसेसेइ" (स० तृ० गा० ३७) ॥ ३२ ॥ शब्दनयं लक्षयति—

**विशेषिततरः शब्दः प्रत्युत्पन्नाश्रयो नयः। तरप्रत्ययनिर्देशाद्विशेषिततमेऽगतिः ॥ ३३ ॥**

"विशेषिततर" इति विशेषिततरः प्रत्युत्पन्नाश्रय ऋजुसूत्राभिमतग्राही नयः शब्द इत्याख्यायते यत्सूत्रं "इच्छइ विसेसियतरं

पच्चुप्पण्णं णओ सद्दो" त्ति तत्र तरप्प्रत्ययनिर्देशाद्विशेषिततमाधोवर्तिविषयत्वलाभाद्विशेषिततमे समभिरूढे एवंभूते चाऽगतिर्नातिव्याप्तिः ॥ ३३ ॥ ऋजुसूत्राद्विशेषमस्य स्पष्टयति—

**ऋजुसूत्राद्विशेषोऽस्य भावमात्राभिमानतः । सप्तभङ्ग्यर्पणाल्लिङ्गभेदादेवार्थभेदतः ॥ ३४ ॥**

"ऋजुसूत्रा"दिति अस्य-शब्दनयस्यर्जुसूत्राद्विशेषः—उत्कर्षः भावमात्रस्याभिमानात्, अयं हि पृथुबुध्नाद्याकारकलितं मृन्मयं जलाहरणादिक्रियाक्षमं प्रसिद्धं भावघटमेवेच्छति, शब्दार्थप्रधानत्वात् घट चेष्टायामिति शब्दार्थस्य भावघट एव योगात्, नतु नामस्थापनाद्रव्यरूपाः (पं) त्रयः, (यं) तत्रोक्तार्थ(र्था)योगात् तथाचैतत्संवाद्याह भाष्यकारः—"णामादयो ण कुम्भा तक्कज्जाकरणओ पडाइ व्व । पच्चक्खविरोहाओ तल्लिंगाभावओ वावि ॥ १ ॥ नामस्थापनाद्रव्यघटा घटत्वेन न व्यवहर्तव्याः, घटार्थक्रियाकारित्वाभावात्, अघटत्वेन प्रतीयमानत्वात् घटव्यवस्थापकधर्म्माभावाच्चेत्येतदर्थः । यद्वा सप्तभङ्ग्यर्पणात् अस्य विशेषः, ऋजुसूत्रस्य हि प्रत्युत्पन्नोऽविशेषित एव कुम्भोऽभिप्रेतः, शब्दनयस्य तु (स एव सद्भावादिभिर्विशेषिततरोऽभिमत इत्येवमनयोर्भेदः, तथाहि—स्वपर्यायैः पर(विशेषावश्यकवृत्तितः) पर्यायैरुभयैर्वार्पितोऽयं कुम्भाकुम्भावक्तव्योभयरूपादिभेदेन सप्तभङ्गीं प्रतिपद्यते इति, यद्भाष्यं—"अहवा पच्चुप्पण्णो उजुसुत्तस्साविसेसिओ चेव । कुम्भो विसेसिययरो सब्भावाईहिं सद्दस्स ॥ १ ॥ सब्भावोसब्भावोभयप्पिओ सपरपज्जओभयओ । कुम्भाकुम्भाऽवत्तव्वोभयरूवाइ भेओ सो ॥ २ ॥" इह कुम्भाकुम्भेत्यादिगाथापश्चार्द्धेन षट् भङ्गाः साक्षादुपात्ताः, सप्तमस्तु आदिशब्दात्, तद्यथा—कुम्भः १ अकुम्भः २ अवक्तव्यः ३ उभयत्ति—संश्चासंश्चेत्युभयम् ४ सन्नवक्तव्य इत्युभयम् ५ तथाऽसन्नवक्तव्य इत्युभयम् ६ आदि-

ऋजुसूत्राच्छब्दनयोत्कर्षः

शब्दसङ्गृहीतस्तु सप्तमः सन्नसन्नवक्तव्यः इति ७ अत्रोभयपदस्य समभिव्याहृतपदार्थतावच्छेदकद्वयप्रकारकबुद्धिविषये शक्तावपि समभिव्याहारत्रैविध्यात् आवृत्त्या त्रिविधोभयबोध इति न्यायमार्गः, सामान्यशक्तावप्युभयपदादेकदैव समभिव्याहारमहिम्ना त्रिविधविशेषप्रकारको बोध इत्यनुभवमार्गः “तदेवं स्याद्वाददृष्टसप्तभेदं घटादिकमर्थं यथाविवक्षितमेकेन केनापि भङ्गेन विशेषिततरमसौ शब्दनयः प्रतिपद्यते, नयत्वादृजुसूत्राद्विशेषिततरवस्तुग्राहित्वाच्च, स्याद्वादिनस्तु सम्पूर्णसप्तभङ्ग्यात्मकमपि प्रतिपद्यन्त” इति विशेषावश्यकवृत्तावुक्तम्। तत्रायं विचारावकाशः । किमियं सप्तभङ्गी अर्थनयाश्रिता उत शब्दनयाश्रिता ? आद्ये तदेकतरभङ्गविशेषणे कथमृजुसूत्राच्छब्दस्य विशेषिततरत्वम्, अर्थनयाश्रितभङ्गस्य शब्दनयाविशेषकत्वात्, उभयेषां विषयविभागस्य दूरान्तरत्वात्, द्वितीयविकल्पे ऋजुसूत्राभिमतार्थपर्य्यायाविषयत्वेनाशुद्धव्यञ्जनपर्य्यायग्राहिणः कुतः शब्दस्य विशेषिततरार्थत्वम् ? नहि तदविषयविषयकत्वं विशेषितशब्दार्थः, किन्तु तद्विषयताव्याप्यविषयताकत्वमिति, नचर्जुसूत्राभिमतसत्त्वमुपमृद्यासत्त्वाख्यद्वितीयभङ्गोत्थापनाच्छब्दस्यर्जुसूत्राद्विशेषिततरत्वं वक्तुं युक्तम्, एवं सति ऋजुसूत्राभिमतं सत्त्वमुपमृद्यासत्त्वग्रहणव्यापृतस्य व्यवहारस्यापि ततो विशेषिततरार्थत्वापत्तेः, विशेष्यकभङ्गानिर्धारकवचनापत्तेश्चेति, तत्रायमस्माकं मनीषोन्मेषः, यद्यप्यर्थपर्यायाश्रिता सप्तभङ्गी सङ्ग्रहव्यवहारर्जुसूत्रैर्व्यञ्जनपर्य्यायाश्रिता शब्दसमभिरूढैवम्भूतैः सम्मतौ सूचिता, तथाप्येतत्प्रकारद्वयाभिधानमर्थव्यञ्जनसाधारणं पर्य्यायसामान्याश्रितसप्तभङ्ग्या अनु(उप)पलक्षणम्, सा च स्वपरपर्य्यायाणां क्रमयुगपद्विवक्षावशात् नयद्वयेन, शुद्धशुद्धतरपर्य्यायविवक्षया च नयत्रयेणापि सम्भवतीति ऋजुसूत्रशब्दप्रयुक्तसप्तभङ्ग्यां द्वितीयादिना, व्यवहारर्जुसूत्रप्रयुक्तायां च तस्यां तृतीयादिना

भङ्गेन ऋजुसूत्राच्छब्दस्य विशेपिततरार्थत्वमुक्तं, नचैवं ऋजुसूत्रकृतसत्त्वापेक्षया सत्ताग्राहिणो व्यवहारस्यापि ततो विशेपिततरत्वस्याभिधित्सितत्वात्, सम्प्रदायश्चोत्तरोत्तरार्थत्वप्रसङ्गदूपणानुद्धारः, सम्प्रदायाविरुद्धभङ्गविपयीभूतेनार्थेन विशेपित ततरार्थत्वप्रसङ्गदूपणानुद्धारः, सम्प्रदायाविरुद्धभङ्गविपयीभूतेनार्थेन विशेपित तरत्वस्याभिधित्सितत्वात्, सम्प्रदायश्चोत्तरोत्तरभङ्गप्रवृत्तावुत्तरोत्तरनयावलम्बनेनैव दृष्टो नान्यथेति न कश्चिद्दोप इति। वाऽथवा लिङ्गभेदादेरर्थभेदाश्रयणादस्य शब्दनयस्यर्जुसूत्राद्विशेपः, तथाहि–(तटः तटं तटी इत्यादौ) अन्यलिङ्गवृत्तेः शब्दस्यान्यलिङ्गभेदलक्षणेन, 'गुरुः गुरवः' इत्यादौ च वचनभेदलक्षणेन वैधर्म्येणार्थभेदस्य स्पष्टमनुभवात्, एवमन्यकारकयुक्तं यत्तदेवास्य मते अपरकारकसम्बन्धं नानुभवतीति अधिकरणवद्ग्रामोऽधिकरणाभिधानविभक्तिवाच्य एव, न कर्म्माभिधानविभक्त्यभिधेय, इति ग्राममधिशेत इति प्रयोगोऽनुपपन्नः, तथा पुरुपभेदेऽपि नैकं वस्त्विति एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्ते पिता इति च प्रयोगो न युक्तः, अपि-

१ "यास्यसि त्वं, यास्यति भवानित्यादौ पुरुपभेदेन" जैनतर्कभापायाम् "पुरुपभेदेऽपि–एहि, मन्ये, रथेन यास्यसि, नहि यास्यति, यातस्ते पिता अथवा एहि, मन्ये, ओदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः। एतं एनं वा, मन्ये, ओदनं भोक्ष्येथे भोक्ष्यध्वे भोक्ष्ये भोक्ष्यावहे भोक्ष्यामहे" इत्यादिस्तु नयप्रदीपे। सम्मतिवृत्तौ तु अत्रोक्तमेव। "तथा एहि, मन्ये, रथेन यास्यामि, न हि यास्यसि, यातस्ते पितेति साधनभेदेऽप्यर्थभेदमाद्रियन्ते पुनः केचित्, तदप्यसङ्गतम्, अहं पचामि त्वं पचसीत्यत्राप्येकार्थत्वप्रसङ्गात्" इतिनयप्रकाशस्तववृत्तौ।

त्वेहि मन्यसे यथाऽहं रथेन यास्यामीत्येवं परभावेनैतन्निर्देष्टव्यं, एवमुपग्रहणभेदोऽपि विरमतीत्यादिर्न युक्तः, आत्मार्थतया हि विरमत इत्यस्यैव प्रयोगस्य सङ्गतेः, नचैवं लोकशास्त्रविलोपः, सर्वत्रैव नयमते तल्लोपस्य समानत्वादिति सम्मतिवृत्तौ व्यवस्थितम्, यद्यपि ग्राममधिशेते इत्यादौ ग्रामोत्तरद्वितीयादिपदादधिकरणत्वत्वादिप्रकारकप्रतीत्यर्थमधिकरणत्वत्वादिविशिष्टे लक्षणैव स्वीकार्य्या तन्निरूढत्वसमानार्थमेव च विशेषानुशासनमपीति वक्तुं शक्यते, तथाप्युक्तविपरीतप्रयोगप्रामाण्याय "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इत्यादिन्यायसाम्राज्याच्चायं विशेष इति दिक् ॥ ३४ ॥ उक्तयुक्त्या यथानेनर्जुसूत्रीयं युवां यास्यथेति मतं दूष्यते तथाह—

**सामानाधिकरण्यं चेन्न विकारापरार्थयोः । भिन्नलिङ्गवचःसङ्ख्यारूपशब्देषु तत्कथं? ॥ ३५ ॥**

"सामानाधिकरण्य"मिति चेत्—यदि विकारापरार्थयोः—विकाराविकारार्थकशब्दयोः 'पलालं दहति' इत्यादौ सामानाधिकरण्यम्—एकार्थान्वयजननयोग्यत्वं नेष्टं ऋजुसूत्रनयेन चेत्? तर्हि भिन्नानि लिङ्गवचःसङ्ख्यारूपाणि येषां तादृशेषु शब्देषु तटस्तटी तटं, गुरुर्गुरवः, स च त्वं च यास्यथः कुरुते करोतीत्यादिषु कथं सामानाधिकरण्यं, न कथञ्चिदित्यर्थः, यथा हि

---

१ "उपसर्गभेदे संतिष्ठते अवतिष्ठते" इति नयप्रदीपतर्कभाषयोः, सम्मतिवृत्तौ तु अत्रोक्तमेव। "तथा सतिष्ठते प्रतिष्ठत इत्यत्रोपसर्गभेदेऽप्यार्थाभेदमाद्रियन्ते पुनः केचित्, उपसर्गस्य धात्वर्थमात्रोद्योतकत्वात्, तदप्यचारु, तिष्ठति प्रतिष्ठते इत्यत्रापि स्थितिगतिक्रिययोरभेदप्रसङ्गात् इति नयप्रकाशस्तववृत्तौ ।

त्वयाग्निष्टोमयाजी पुत्रोऽस्य जनितेत्युक्तं स्वीक्रियते, कालभेदात्, तथा लिङ्गादिभेदादर्थभेदः सुतरां स्वीकर्तव्य इत्युपदेशः ॥ ३५ ॥ समभिरूढं लक्षयति—

**नयः समभिरूढोऽसौ यः सत्स्वर्थेष्वसंक्रमः । शब्दभेदेऽर्थभेदस्य व्याप्त्यभ्युपगमश्च सः ॥ ३६ ॥**

"नय" इति यः सत्स्वर्थेषु घटादिष्वसङ्क्रमो घटाद्यन्यशब्दावाच्यत्वमसौ नयः समभिरूढः, यत्सूत्रं "वत्थूओ संकमणं होइ अवत्थू णये समभिरूढे" त्ति "सत्स्वर्थेष्वसङ्क्रमः" इति तत्त्वार्थभाष्यम्, तत्र च यद्यपि यथाश्रुतार्थोऽभावालम्बनत्वेनासम्भवी संज्ञाभेदेनार्थभेदाभ्युपगन्तृत्वम् घटपटादिसंज्ञाभेदेनार्थभेदाभ्युपगन्तरि नैगमादावतिव्याप्तं तथापि शब्दभेदेऽर्थभेदस्य व्याप्तेरभ्युपगमः सोऽसङ्क्रमपदार्थः, तथा च संज्ञाभेदनियतार्थभेदाभ्युपगन्तृत्वं समभिरूढत्वमिति लक्षणलाभान्न कोऽपि दोषः, एवम्भूते चातिव्याप्तिवारणाय तदन्यत्वेन विशेषणीयम् ॥ ३६ ॥ एतन्मते शब्दनयशिक्षाप्रकारमाह—

**तटस्तटं तटीत्यादौ शब्दभेदोऽर्थभिद्यदि । तद्घटः कुम्भ इत्यादौ, कथं नेत्यस्य मार्गणा ॥ ३७ ॥**

"तट" इति हे शब्दनय ! यदि तव मते तटस्तटी तटमित्यादौ शब्दभेदोऽर्थं भिनत्तीत्यर्थभिद्—अर्थभेदकारी, तत्-तर्हि, घटः कुम्भ इत्यादौ शब्दभेदः कथं नार्थभित् ? इति अस्य—समभिरूढनयस्य, मार्गणा—विचारणा, अयं भावः, यदि लिङ्गवचनभिन्नानामर्थानां ध्वनिभेदाद्भेदस्तवानुमतस्तर्हि घटकुम्भादिशब्दवाच्यानामपि किमिति भेदो नेष्टः ? ध्वनिभेदस्यात्रापि समानत्वात्। किञ्च विभिन्नलिङ्गवचनादिशब्दवाच्यत्वं अर्थभेदे प्रयोजकं त्वयोच्यत इति गौरवं, मया तु विभिन्नशब्द-

वाच्यत्वमेव तथा वाच्यमिति लाघवं, नच नानार्थैकशब्दवाच्यानामप्यर्थानां यथा नाभेदस्तथा भिन्नशब्दवाच्यानामपि न भेदो भविष्यतीत्याशङ्कनीयम्, यतो विभिन्नशब्दवाच्यत्वस्यार्थभेदप्रयोजकत्वं, न तद्व्यापकत्वं येन नानार्थस्थले व्यापकाभावाद् व्याप्याभाव आपादयितुं शक्येत, किन्तु तद्व्याप्यत्वं, नच व्याप्याभावाद् व्यापकाभाव आपादयितुं शक्यते, तथा सत्ययोगोलकेऽव्यभिचारात्, तस्मान्नानार्थस्थले शब्दभेदाद्भेदाभावेऽपि लक्षणस्वरूपादिभेदाद्भेदो भविष्यति, नह्यर्थभेद एकमेव प्रतिनियतं प्रयोजकं, भिन्नशब्दवाच्यतया तु भिन्नकालवृत्तितयै(ये)वार्थभेदो ध्रुवः इति सर्वमनाविलम्॥३७॥ ननु यद्येवं समभिरूढनयमते शब्दभेदादेवार्थभेदस्तदा शब्दानां व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तमित्यागतं तथा च "डित्थो डवित्थ" इत्यादिपारिभाषिकी संज्ञा नः छिद्येत, तत्रेच्छामात्रस्योपाधित्वेन यथास्थितव्युत्पत्तिनिमित्ताभावादिति चेत्? अत्रेष्टापत्तिरित्यभिप्रायवानाह—

**संज्ञाऽर्थतत्त्वं न ब्रूते त्वन्मते पारिभाषिकी । अनादिसिद्धः शब्दार्थो नेच्छा तत्र निबन्धनं ॥ ३८ ॥**

"सञ्ज्ञा" इति त्वन्मते—समभिरूढनयमते, पारिभाषिकी सञ्ज्ञा—डित्थडवित्थादिका, अर्थतत्त्वं न ब्रूते—पदार्थानुभवं न जनयति, यतः शब्दार्थोऽनादिसिद्धः—स्वाभाविकधर्म्मनिबन्धनः, तत्र—शब्दार्थे, इच्छा न निबन्धनमतिप्रसङ्गात्, इतीच्छाविशिष्टशक्त्यभावात्तस्याऽबोधकत्वमिति भावः । तदिदमुक्तं तत्त्वार्थभाष्ये "तत्र पारिभाषिकी नार्थतत्त्वं ब्रवीति" इति ॥ ३८ ॥ एवम्भूतं लक्षयति—

**एवम्भूतस्तु सर्वत्र व्यञ्जनार्थविशेषणः । राजचिह्नैर्यथा राजा नान्यदा राजशब्दभाक् ॥ ३९ ॥**

समभिरूढःशब्दनये शिक्षयति

॥ ४६ ॥

"एवम्भूतस्त्वि"ति सर्वत्र व्यञ्जनं–शब्दस्तेनार्थं विशेषयति यः स एवम्भूतः, "वंजण अत्थ तदुभयं एवंभूओ विसेसेइ" इति निर्युक्तिकारः "व्यञ्जनार्थयोरेवम्भूतः" इति तत्त्वार्थभाष्यम्, पदानां व्युत्पत्त्यर्थान्वयनियतार्थबोधकत्वाभ्युपगन्तृत्वमेवम्भूतत्वमिति निष्कर्षः, नियमश्च कालतो देशतश्चेति न समभिरूढातिव्याप्तिः अयं चास्याभिमानः, यदि घटपदव्युत्पत्त्यर्थाभावात्कुटपदार्थोऽपि न घटपदार्थस्तदा जलाहरणादिक्रियाविरहकालेऽपि घटो न घटपदार्थः धात्वर्थविरहाविशेषादिति, व्यञ्जनार्थविशेषकत्वमस्य यदुक्तं तदुदाहरति राजचिह्नैः-छत्रचामरादिभिः यथा राजन् शोभमानः सभायामुपविष्टो राजोच्यते अन्यदा–छत्रचामरादिशोभाविरहकाले, राजशब्दभाग्–राजशब्दवाच्यो न भवति, राजपदव्युत्पत्तिनिमित्ताभावादित्यर्थः। नन्वेतन्मते व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तमिति केनचिद्रूपेण तदतिप्रसक्तं वाच्यमन्यथा तु गच्छतीति गौः इति व्युत्पत्त्या गच्छन्नश्वादिरपि गौः स्यात्, तथा च छत्रचामरादिविरहकाले तत्प्रयुक्तराजनाभावेऽपीतरातिशायिपुण्यादिप्रयुक्तराजनस्यानतिप्रसक्तस्याव्याहतत्वात् कथं न राजशब्दवाच्यत्वमिति चेत्? सत्यं, प्रसिद्धार्थपुरस्कारेण प्रवृत्तस्यैवम्भूतनयस्य स्वार्थातिप्रसङ्गो न दूपणं, किन्तु तन्निवारकनयान्तरोपायकत्वेन भूपणमेव, एतदुपजीवी व्यवहारस्तु यथावृत्ति, हरिपदे तु पशुत्वं प्रयोगोपाधिर्यथा वा धेन्वादिपदे गोत्वं शक्त्युपाधिस्तथा गवादिपदे घटादिपदे च गोत्वघटत्वादेस्तथात्वेनातिप्रसङ्गभङ्गमाह,नचैवं घटादिपदात् निर्विकल्पकापत्तिः, क्रियाशब्दमात्रवादिन एतस्य मते क्रियोपरागेणैव पदार्थोपस्थितिनियमे तद्दोपाभावात् [म] सर्वे शब्दा व्युत्पन्ना एवेति वैयाकरणैकदेशिनां पक्षतः एतन्मतेनैव जातिगुणक्रियायदृच्छाशब्दवादिनः शब्दनयानुसारिणः, यदृच्छा[या]वर्जशब्दत्रयवादिनः समभिरूढनयानुसारिणश्च गोघटादिपदे गोत्वघटत्वादिविशिष्टशक्ते-

रन्वयव्यतिरेकाभ्यामवधारणेऽपि पङ्कजादिपदे योगमात्रमेवाहुः । नच पद्मत्वप्रतीत्यर्थं तत्र समुदायशक्तिकल्पनमिति युक्तम्, व्युत्पत्तिग्रहापेक्षितपद्मत्वं(त्व)नियतशक्तिग्रहाहितसंस्कारात् फलबलकल्प्योद्बोधिताच्छक्तिस्मृतिवत् पद्मत्वोपस्थितेरप्युपपत्तेः, नच संस्कारोपस्थितस्य शाब्दबोधेऽप्रवेशो, अन्यथा 'किं पचति?' इत्युक्ते प्रत्यक्षोपस्थितं कलापमादाय तत्र कर्म्मत्वं(इव) स्मृतकलापकर्म्मकपाकबोधप्रसङ्गादिति वाच्यम्, अन्यान्वयतात्पर्य्यके पुरुषान्तरेण कलापमित्यभिधाने स्वयं वा स्मर्य्यमाणे तात्पर्य्याग्रहादेवान्वयानवबोधात्, तद्ग्रहे च वधूपदर्शितकलापेनाप्यन्वयावबोधात्तद्ग्रहस्यैव नियामकत्वात्, अत एव तात्पर्य्यविषयान्वयप्रतियोगिवाचकपदाध्याहारापेक्षयाऽर्थाध्याहार एव लाघवमामनन्ति । अत एव पदजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुत्वात्संस्कारोपस्थितस्य न शाब्दबोध इति निरस्तं, तात्पर्य्यस्यैव नियामकत्वे पदजन्यत्वप्रवेशे गौरवात्, न च शक्तिं विना पद्मत्वस्योपस्थित्यनियमेऽनुभवानियमप्रसङ्गः, शक्तिं विना शक्तेरिव तस्य नियतस्मृतिसम्भवे अनुभवनियमस्य युक्तत्वात्, लक्षादेरनुभवानियमस्योपस्थित्यनियमप्रयोज्यत्वात्, अन्यथा नानार्थेऽतात्पर्य्यविषयस्यापि शक्यतयाऽनियतानुभवविषयताप्रसङ्गात्, शक्यानेकोपस्थितौ तात्पर्य्यं नियामकमिति चेत्, न, अशक्योपस्थितावपि तस्यैव तथात्वात्, नच कुमुदाद्यप्रतीत्यर्थं समुदायशक्तिकल्पनमित्यपि युक्तं, तत्राशक्तेरेव तदप्रतिपत्तेः, नहि घटपटा(दा)दावपि पटाद्यप्रतिपत्त्यर्थं शक्तिकल्पनं, नच योगस्य कुमुदादिसाधारणत्वात्तत्रापि प्रयोगप्रसङ्गः, योगपुरस्कारेणेष्टत्वात्, नहि 'पङ्कजशैवालमानय' 'पङ्कजकुमुदमानय' इति प्रयोगं कश्चिद्बाध्यतया व्यवहरति, अस्तु वा परस्य समुदायशक्तिरिव मम पद्मत्वस्मरणस्य कुमुदादौ प्रयोगप्रतिबन्धकत्वम्, यद्वा पङ्कज(पङ्क)पदोत्तर'ज' पदस्यैव कुमुदादिस्मरणप्रतिबन्धकत्वं कल्पनीयं 'गो-

शब्दसमभिरूढनयाभ्यांपङ्कजादिपदविचारः

बलीवर्दौ' इत्यत्र बलीवर्दसमभिव्याहृतगोपदस्य बलीवर्दस्मरण इव, तेन न कुमुदप्रियस्य कुमुदस्मरणेन पद्म एव प्रयोगप्रति-
बन्धः । नचैवं लक्षणयापि पङ्कजपदात् कुमुदानुपस्थितिप्रसङ्गः, शक्त्या तदुपस्थितावेव तत्प्रतिबन्धकत्वात्, अत एवाव-
यवशक्त्यैव केचित्कौटव्यं कल्पयन्ति, नच पद्मत्वप्रकारकपद्मविषयकानुभवजनकत्वात् तादृशस्मरणजनकत्वाद्वान्यत्
पदस्य शक्तत्वं, तद(द्)ज्ञानस्य नैयायिकमीमांसकयोः पदार्थप्रत्यये व्यभिचारेणाकरणत्वात्, तदनुपयुक्तायाश्च शक्तित्वस्य परि-
भाषामात्रत्वादिति समुदायशक्तेरावश्यकत्वम्, नच तदभावेऽनुभावकत्वस्यैवानुपपत्तिःअसम्बद्धानुभवेऽतिप्रसङ्गादिति वाच्यं
पूर्वपूर्वतरज्ञानविषयत्वस्यैव सम्बन्धत्वात्, तस्य चानादित्वादिति वाच्यं, उक्तानुभवस्मरणजनकत्वमेव शक्तत्वमित्यभ्युपगमे
गङ्गापदादेस्तीरत्वप्रकारकतीराद्यनुभवजनकत्वेन तत्र शक्तिप्रसक्तौ लक्षणामात्रोच्छेदप्रसङ्गात्, अथ लाक्षणिकमननुभाव-
कमेव 'गङ्गायां घोष' इत्यत्र घोषादिपदस्यैव लक्षणास्मारिततीरान्वयानुभवजनकत्वात्, तस्य च शक्तत्वादेव नोक्तदोष इति
चेत् ? न, तथापि तत्प्रकारकतद्विषयकज्ञानजनकत्वाप्रतिसन्धानेऽपि देवदत्तादिपदादसौ बोद्धव्यः, इत्यभिप्रायप्रतिस-
न्धानादर्थोपस्थितेर्दर्शनात्सर्वत्र तत्तदर्थविशेषेऽभिप्रायविशेषविषयत्वस्यैव पदानां वाचकत्वस्य व्यवस्थितेः, नच देवदत्ता-
दिपदे सङ्केतज्ञानस्य कारणतावधारणात्पूर्वं गवादिपदेषु सङ्केतकल्पकप्रमाणाभावादर्थप्रतीतेश्चानुभवसिद्धत्वाद् व्यभिचा-
रेण नेदं हेतुः, किन्तु तद्विषयानुभवजनकत्वज्ञानमेव, नच देवदत्तादिपदे व्यभिचारान्न तस्यापि हेतुत्वं एतदर्थज्ञानमेतत्प-
दजन्यत्वेनेच्छाविषय इति ज्ञानेऽर्थज्ञाने पदजन्यत्ववैशिष्ट्यभाने ध्रुवे पदेऽपि तज्जनकत्वज्ञानसम्भवादिति वाच्यं, सङ्केत-
त्वेन रूपेण तद(द्)ज्ञानस्य हेतुत्वानभ्युपगमेन तेन रूपेण व्यभिचारज्ञानेऽप्यदोषात्, तद्धीजनकतावच्छेदकतावच्छेदक-

त्वादिना तद(द्)ज्ञानस्य पूर्वमपि गवादिपदे सम्भवेन व्यभिचाराभावात्, नच पूर्वोक्तरीत्यानुभवजनकत्वस्याप्यव्यभिचारः, इदं पदमेतदर्थानुभवजनकमिति स्वातन्त्र्येण पदेऽनुभवजनकत्वे वैशिष्ट्यज्ञानस्यैव हेतुतायाः परेणाभ्युपेतत्वात्तस्य चाधुनिकसङ्केतस्थले व्यभिचारदर्शनादिति दिक् । नच शब्दसम्बन्धमनपेक्ष्य संस्कारमात्रोपस्थितस्य "पङ्कजमानय" इत्यत्रान्वये पद्मत्वव्यापकानां द्रव्यत्वादीनामन्वयः स्यादिति वाच्यं, शब्दसम्बन्धोपगमेऽपि संस्कारप्राकट्यस्यावश्योपजीव्यत्वात्, 'घटमानय' इत्यत्र छिद्रेतरघटत्वस्येव प्रकारस्यापि भानेन लक्षणोच्छेद इति तूक्तप्रायं, नच संस्कारप्राकट्यात् प्रकारिणोऽप्युपस्थितेर्लक्षणोच्छेद एवात्रोक्तगङ्गापदान्यथानुपपत्त्याऽशक्यतात्पर्यस्यैव लक्षणाकल्पकत्वात्, यद्यपि "गच्छ गच्छसि चेत्कान्त" इत्यादावशक्यमरणतात्पर्यकत्वेऽपि न लक्षणा, अनुमानेनैव निर्वाहात्, तथाप्यसति गत्यन्तरे तात्पर्यस्य लक्षणाकल्पकत्वमित्यदोषः । ऋजवस्तु घटादिपदानां विशेषतात्पर्यसाहाय्येन नीलघटादिबोधकत्ववत्पङ्कजपदस्यापि पङ्कजनिकर्तृविशेषपद्मतात्पर्यग्रहसाहाय्येन पद्मान्वयबोधकत्वसम्भवादपि न तत्र शक्तिः, नचैवं पङ्कजनिकर्तृत्वेनैव तदुपस्थितिः स्यान्न पद्मत्वेनेति वाच्यं, इष्टापत्तेः, कथमन्यथा कदाचित्कुमुदेऽपि प्रयोगस्तव लक्षणया, मम तु तत्कृतयाऽवयवशक्त्यैवाकाङ्क्षादिसमवहितया शक्यार्थविषयी कुमुदबोधसम्भव इति महान् विशेष इत्याहुः । नैगमनयानुसारिणो नैयायिकास्तु संस्कारमात्रवशात्पद्मत्वभाने नियमतः कल्प्यमानेऽगृहीतसमुदाया(य)शक्तेरप्यनुभूतपद्मत्वस्य तद्भानापत्तिः, पङ्कोत्तरज[न]पदस्यैव संस्कारोद्बोधकस्य त्वया वाच्यत्वात्, नच प्रत्येकव्युत्पन्नस्य समुदायव्युत्पत्तिं विना पद्मत्वप्रकारकपद्मानुभवो जायते, नच पद्मत्वान्वयतात्पर्यग्रहे स जायत एव तदग्रहे तु तत एव स न स्यादिति वाच्यं, तथापि प्रत्येकाव्युत्पन्नस्य

पङ्कजपदात्पद्मत्वप्रकारकप्रतीतेः, कोशेषु पङ्कजपद्मपदयोः पर्य्यायताकीर्तनस्य च समुदायशक्तिसाधकत्वात्, शब्दानुपस्थित-
स्य शब्दविषयताभ्युपगमे च घटादावव्युत्पन्नस्य घटविषय(क)प्रवलसंस्कारात्तद्भानप्रसङ्गः, पशु(त्व)गोत्वयोः प्रयोगोपाधित्वं
शक्त्युपाधित्वं चेति तु परिभाषामात्रं, घटादिपदे घटत्वादेरपि तत्त्वापत्तेः, उपाधिभूतेन घटत्वादिना संस्कारोपस्थितेर
प्रकारेण निर्विकल्पकापत्तिनिरासस्यापि शक्य[त्व]भाषणत्वात्, पद्मत्वस्मरणस्य पङ्कपदोत्तरजपदस्य वा कुमुदादिप्रयो-
गप्रतिवन्धकत्वं शक्तिकौव्यं (व्ज्यं) वा कल्प्यते इत्यपि यदुक्तं तदयुक्तं, अगृहीतपद्मशक्तेः पङ्कजपदात्पङ्कजनिकर्तृत्वेन रूपेण
कुमुदादिवोधदर्शनात्, अत एवाव्युत्पन्नः 'पङ्कजमानय' इति वाक्यश्रवणानन्तरं कुमुदानयने दोलायते, सामान्यशब्दत्वाद-
मीषां, विशेषतात्पर्यवशाद्विशेषवोधकत्वमिति यदुक्तं, तत्रापि वस्तुगत्या यो विशेषस्तद्वोधकत्वं वा विशेषाकारेण वा? आद्ये
पद्मत्वाननुभवापत्तिः, द्वितीये लक्षणाप्रसङ्गः, नचेष्टापत्तिः, मुख्यार्थविशेषितस्यैव पद्मत्वस्य भानात्, तथाच वृत्तिद्वयविरो-
धस्य जागरूकत्वात्, 'पङ्कजं कुमुदमानय' इत्यत्र च पङ्कजपदे न लक्षणा, किन्तु पद्मत्वमुपस्थितमप्यन्वयायोग्यत्वात्, 'नालं'
इत्यवयवार्थ एव परमन्वेतीति न किञ्चिदनुपपन्नम्, नच रूढ्या शीघ्रोपस्थितेन पद्मेनावरुद्धतयोपस्थितस्य पङ्कजनिक-
र्तृत्वस्य कुमुदान्वये निराकाङ्क्षत्वात् स्वतन्त्रोपस्थितये लक्षणावश्यम्भावः, योगार्थस्य रूढ्यर्थविशेषणतायां तथाभावेऽपि विशे-
ष्यतायां स्वातन्त्र्यानपायात् अन्यथा "श्येनेन यजेत" इत्यत्र वलवदनिष्टानुवन्धित्वमयोग्यत्वान्नान्वेतीति सिद्धान्तभङ्गप्रस-
ङ्गात्। यत्तूक्तं "प्रत्यक्षोपस्थितेनापि कलापेन तात्पर्य्यग्रहं सहकारिणमासाद्य पचति इत्यत्रान्वयवोध इष्यत" इति तत्तदा
शोभते, यदि तात्पर्यग्रहस्य वाक्यार्थप्रतिपत्तावङ्गत्वमीक्षामहे, तदेव तु नास्ति, प्रमाणाभावात्, प्रत्युत तात्पर्य्यमस्य न ज्ञायते

अस्माद्वाक्यादयमर्थस्तावदवगम्यत एवेति विचिन्त्य परावृत्त्य कुत्रास्य तात्पर्य्यमिति पृच्छति(प्र)योज्यवृद्धः, इति न लाक्षणिकपदार्थोपस्थितान्वयव्यतिरेकाभ्यां तात्पर्य्यग्रहस्य हेतुत्वावधारणादन्यत्रापि तत्कल्पनं युक्तं, सत्यां पदार्थोपस्थितौ तात्पर्य्यग्रहविलम्बेन वाक्यार्थानुभवविलम्बानुपलब्धेः, न पुरुषान्तरोदीरितकलापपदार्थोपस्थितावपि तात्पर्य्यग्रहसत्त्वासत्त्वाभ्यामन्वयबो(धाबो)धदर्शनाद्वाक्यार्थानुभवेऽपि तद्धेतुत्वं, आसत्तिसत्त्वासत्त्वाभ्यामेव तौ, न तात्पर्य्यग्रहसत्त्वासत्त्वाभ्यामिति। पुरुषान्तरोदीरितकलापपदेनापि 'पचति' इत्यस्य समभिव्याहारप्रतिसन्धानेन पुरुषैः खण्डने क्रियमाणे श्लोक इवान्वयबोधदर्शनाद्वाक्यार्थानुभवे समभिव्याहारप्रतिसन्धानस्यैव हेतुत्वात्। अर्थाध्याहारपक्षोऽप्ययुक्त एव, विमतो द्वारान्वयबोधः द्वारोपस्थापकपदजन्यः, शब्दद्वारान्वयबोधत्वात्, सम्प्रतिपन्नवत्, इत्यनुमानात्, पिधेहि इत्यत्र 'द्वारम्' इति शब्दाध्याहारस्यैव सिद्धेः। किञ्च विभक्तिविशेषसमभिव्याहारमासाद्यैव पदानामर्थानुभावकत्वं, तथैवाकाङ्क्षादर्शनादिति, [चेन्न] एव(वं) पदार्थो न शाब्दस्तदंश एवाकाङ्क्षाऽसम्भवेनान्वयबोधानुपपत्तेः, गौरवस्य प्रामाणिकत्वे यावदन्वयप्रतियोग्युपस्थितेः, शाब्दत्वस्य शाब्दबोधे तंत्रत्वादिति दिक्। स्यादेतत्, 'पङ्कजमानय' इत्यत्र पङ्कजशब्देन वाक्यार्थज्ञानानुकूलं कीदृक् पदार्थज्ञानं जन्यते 'पद्मं पङ्कजनिकर्तृ' इत्याकारमिति चेत्? तत्किं अनुभवरूपं स्मरणरूपं वा? नाद्यः, सामग्रीविरोधात्, पङ्कजनिकर्तृत्वांशे ह्यनुभवसामग्री पद्मांशे स्मरणसामग्री ते च मिलित्वा कथमेकं कार्य्यं जनयेतां? न द्वितीयः, उपपदधातुप्रत्ययप्रत्येकसङ्केतप्रतिसन्धानजस्मरणानि(नां)समुदायार्थस्मृतिकाले असत्त्वादुत्तरोत्तरेण पूर्वपूर्वनाशात्, नच प्रत्येकस्मरणजन्य-

नैगमनयानुसारेण पङ्कजादिपदविचारः

संस्कारसमुदायात् पङ्कजनिकर्तृत्वपद्मत्वा(नयना)नामेकमेव समूहालम्बनं स्मरणं कार्यदर्शनात्कल्प्यत इत्यपि युक्तं, एवमपि
हि पङ्कजनिकर्तृपद्मानयनान्वयः प्रत्येकं स्यात्, नतु विशिष्टवैशिष्ट्येन। किञ्च द्वयेनान्वये वाक्यभेदप्रसङ्गः कथङ्कारं वारणीयः?
कथं वा न गवादिपदेऽपि योगरूढिः? को हि 'गमेडौ' 'सप्तम्यां जनेर्ड' इत्यनयोर्विशेषः? अनुशासनावधृतविभागप्रकृतिप्रत्य-
यशक्तिभिरुभयत्र योगरूढेरेव सम्भवादिति उ(अत्रो)च्यते 'पङ्कजमानय' इति वाक्यात्पङ्कजनिकर्तारं पद्मं समानयेति प्रतीतेः
पङ्कजपदेन प्रत्येकसमुदायशक्तिप्रतिसन्धानसहकारिवशात् मिलितगोचरमेकमेव स्मरणं जन्यते, तत्रासत्तिवशेन विशेष्ये
विशेषणमिति रीत्या पङ्कजनिकर्तृत्वपद्मत्वविशिष्टानयनस्यैकदैवान्वयवोधः, यद्वा पङ्कजनिकर्तृत्वादीनां प्रत्येकपदोपस्थितानां
प्रथमतस्तावदन्वयवोधस्तदनन्तरं तेन समं पद्मत्वस्यानन्तरमानयनान्वय इत्याद्यूह्यं। नचैकस्य पङ्कजपदस्य पदवाक्य-
भावविरोधः, समुदायापेक्षया पदत्वम्, अवयवापेक्षया च वाक्यत्वमित्येवमविरोधात्। न च गवादिपदेऽपि योगरूढेः(ढिः)
'डौ' प्रत्यये शक्त्यवधारकाभावान्नियतैकप्रकृतिकत्वेनावापोद्वापकल्पनासम्भवात्, अनुशासनं तु रेखागवयेन सत्यगवयज्ञा-
नवत्साधुत्वाद् व्याख्यानमात्रपरं, न च धेन्वादिपदेऽप्येवं स्यात्, जानुदानुभानुशब्दादावावापोद्वापक्रमेण तत्र शक्तिः
कल्प्या, तद्वरं रूढिरेव, नहि धेन्वादिपदे योगरूढिरिति गौतमवचनमस्ति, येन योगत्यागेऽपसिद्धान्तः स्यादिति,। व्यव-
कल्प्या, तद्वरं रूढिरेव, नहि धेन्वादिपदे योगरूढिरिति गौतमवचनमस्ति, येन योगत्यागेऽपसिद्धान्तः स्यादिति,। व्यव-
हारनयानुसारिणस्तु पङ्कजादिपदेऽपि रूढिरेव, व्युत्पत्तेः सर्वत्र साधुत्वार्थत्वात्, अत एव योगत्यागेन स्थलपद्मे पङ्कज-
पदस्य(प्रयोगः)इत्याहुः। वयं तु ब्रूमः, व्युत्पत्तिरहितत्वं रूढित्वं,[परि]व्युत्पत्तिसहिष्णुत्वं यौगिकत्वं, तदसहिष्णुत्वं च मिश्र-

मिथः प्रतिबन्ध-
त्वम्, इति पदानां यौगिकादिविभागः पारिभाषिक एव, परमार्थतस्तु योगरूढिनययोः स्वस्वजन्यशाब्दबोधे
कत्वेन स्यात् यौगिक एव शब्दः, स्याद्रूढ एवेत्यादिरीत्या सप्तभङ्गीप्रवृत्तिरेव युक्ता, नयद्वयजन्याकाङ्क्षयोः सप्तभङ्ग्युत्थाप-
कत्वस्य सर्वसिद्धत्वात्, अत एवावयवसमुदायशक्तिभ्यां बोधकत्वम्, पङ्कजादिपदे योगरूढित्वमिति न्यायनयैकान्तो न युक्तः
तन्नये नामधात्वोः सम्भूयाबोधकत्वेन तयोस्तात्पर्यग्राहकतायाः 'ड' प्रत्ययस्यैव च पङ्कजनिकर्तरि लक्षणायाः स्वीका-
रात्, नचावयवद्योत्यसमुदायशक्यार्थबोधकत्वेन तथात्वं युक्तं, एवं सति 'प्रजयति' इत्यत्र प्रोत्तरजित्वेन प्रकृष्टजय इव
पङ्कजपदोत्तर 'ड' प्रत्ययत्वेन पङ्कजनिकर्तृपद्म एव निरूढलक्षणासम्भवे समुदायशक्तौ मानाभावादनन्यलभ्यस्यैव शब्दा-
र्थत्वादन्यथा समासे न शक्तिरिति मतभङ्गप्रसङ्गात्, न चेदेवं राजवाचके भूधनादिशब्दे भूधनवति लक्षणया यौगिके
राजत्वेन पृथग्बोधकतया योगरूढत्वप्रसङ्गः कथङ्कारं वारणीयः, विशिष्टरूढ्येकान्तनयो विशिष्टयोगैकान्तनयो वा तत्र
समानप्रसर इति तयोर्महायोधयोरिव युद्धं वारयितुं स्याद्वादमहाराजं विना कोऽन्यः समर्थः इति विभावनीयम् । एतेन
योगार्थस्य नियमतोऽभानप्रसङ्गेन मीमांसकनयैकान्तोऽपि निरस्त, इति नययोजनयैव सर्वा शाब्दी प्रक्रियानाविला ॥३९॥
यत् सिद्धं तदाह—

तदेवं नयमतस्य विचित्रत्वात्प्रसिद्धधात्वर्थपुरस्कारेणैवम्भूतनयप्रवृत्तिरिति व्यवस्थापितं एवं च सति

सिद्धो न तन्मते जीवः, प्रोक्तः सत्त्वादिसंज्ञयपि । महाभाष्ये च तत्त्वार्थभाष्ये धात्वर्थबाधतः ॥ ४० ॥

"सिद्ध" इति तन्मते—एवम्भूतनयमते, सत्त्वादिसंज्ञयपि—सत्तायोगात्सत्त्वो, अतति स्वान् पर्यायानित्यात्मा इत्यादिसंज्ञा-



---

१ तांस्तान् ज्ञानदर्शनसुखादिपर्यायान् गच्छतीत्यात्मेत्यर्थः

धार्य्यपि, सिद्धो महाभाष्ये–विशेषावश्यके, तत्त्वार्थभाष्ये च, धात्वर्थबाधतो–'जीव प्राणधारणे' इति धात्वर्थानन्वयाज्जीवो न प्रोक्तस्तथा च विशेषावश्यकवचनम् "एवं जीवं जीवो संसारी पाणधारणानुभवो । सिद्धो पुणो अजीवो जीवणपरिणामरहिउ त्ति" ॥ ४० ॥

एतदेव तत्त्वार्थवचनमनूद्य व्यवस्थापयति—

**जीवोऽजीवश्च नो जीवो, नो अजीव इतीहिते । जीवः पञ्चस्वपि गतिष्विष्टो भावैर्हि पञ्चभिः ॥ ४१ ॥**

"जीव"इति जीवोऽजीवो नो जीवो नोऽजीवश्चेति चतुर्भिः समैः पदैः कोऽर्थः प्रतिपाद्य इतीहिते–प्रश्नयोग्यविचारविषयीकृते सिद्धान्तिना गतिमार्गणायां पञ्चस्वपि गतिषु–नारकतिर्यग्नरामरसिद्धिगतिलक्षणासु हि–निश्चितं पञ्चभिर्भावैरौदयिकक्षायिकक्षायोपशमिकौपशमिकपारिणामिकलक्षणैः जीव इष्टः, व्युत्पत्तिनिमित्तजीवनलक्षणौदयिकभावोपलक्षितात्मत्वरूपपारिणामिकभावविशिष्टस्य जीवस्य भावपञ्चकात्मनो जीवपदार्थत्वात्, नचात्मत्वप्रवृत्तिनिमित्तोपादानेनैवानतिप्रसङ्गे किं व्युत्पत्तिनिमित्तोपलक्षणग्रहणेन ? इति वाच्यं, संभवति तदुपलक्षकभावे तत्त्यागस्यान्याय्यत्वात्, अन्यथा मण्डपाश्वकर्णादिपदतुल्यताप्रसङ्गादिति दिक् ॥ ४१ ॥

**नञि सर्वनिषेधार्थे पर्युदासे च संश्रिते । पुद्गलप्रभृति द्रव्यमजीव इति संज्ञितं ॥ ४२ ॥**

"नञी"ति सर्वनिषेधार्थे–जीवत्वावच्छिन्नान्योन्याभाववदर्थे नञि विवक्षिते, पर्युदासे–सादृश्ये च तत्र संश्रिते–तात्पर्य्य-

विषयीकृते पुद्गलप्रभृति–पुद्गलादिकं द्रव्यं, अजीव इति पदेन संज्ञितं, पर्य्युदासानाश्रयणे तु जीवस्य गुणपर्य्याययोरपि भेदनयाश्रयणेऽजीवपदप्रयोगप्रसङ्ग इति भावः ॥ ४२ ॥

**इति नो शब्देऽजीवः सर्वनिषेधके । देशप्रदेशौ जीवस्य तस्मिन्देशनिषेधके ॥ ४३ ॥**

"नो"इति नो जीव इतिशब्दवाच्ये नो शब्दे सर्वनिषेधके विवक्षिते अजीव एव, देशनिषेधके तु नो शब्दे आश्रीयमाणे देशनिषेधस्य देशाभ्यनुज्ञाना(न)न्तरीयकत्वाज्जीवस्य देशप्रदेशावेव नोजीवशब्दव्यपदेश्यावभ्युपगन्तव्यौ ॥ ४३ ॥

**जीवो वाऽजीवदेशो वा, प्रदेशो वाप्यजीवगः । अनयैव दिशा ज्ञेयो, नोअजीवपदादपि ॥ ४४ ॥**

"जीवो वे"ति अनयैव–उक्तयैव दिशा नोअजीवपदादपि नोशब्दस्य सर्वनिषेधकत्वे जीवो–जीवपदार्थो वा वोध्यः, तस्य देशनिषेधकत्वे चाजीवदेशो वाऽजीवगो–अजीवाश्रितः प्रदेशो वा,'अमा नो ना प्रतिषेधे' इत्यनुशासनतौल्येऽपि संसर्गाभावोऽन्योन्याभावश्च नञोऽर्थः, नोशब्दस्य त्वभाव एकदेशो वा, तत्र चान्वयितावच्छेदकावच्छिन्नप्रतियोगितात्वं तदेकदेशत्वादि व्युत्पत्तिवललभ्यमिति सिद्धान्तपरिभाषेति निगर्वः ॥ ४४ ॥

उक्तं मतं कियतां नयानामित्याह ।

**नैगमो देशसङ्ग्राही व्यवहारर्जुसूत्रकौ । शब्दः समभिरूढश्चेत्येवमेते प्रचक्षते ॥ ४५ ॥**

"नैगम" इति नैगमो–नैगमनयः, देशसङ्ग्राही–अवान्तरसङ्ग्रहः, सर्वसङ्ग्रहस्य सन्मात्रार्थत्वात् तत्त्यागः, व्यवहारर्जुसूत्रकौ–व्यवहारनय ऋजुसूत्रनयश्च शब्दः समभिरूढश्चेत्येते नया एवं प्रचक्षते ॥ ४५ ॥

**भावमौदयिकं गृह्णन् एवम्भूतो भवस्थितं । जीवं प्रवक्त्यजीवं तु सिद्धं वा पुद्गलादिकं ॥ ४६ ॥**

"भाव"मिति एवम्भूतनयस्तु औदयिकं भावं व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्ततया गृह्णन्, भवस्थितं–संसारिणं जीवं, प्रवक्ति–जीवशब्देन व्यपदिशति, अजीवं–अजीवपदार्थं तु सिद्धं वा पुद्गलादिद्रव्यं वेच्छत्यसौ ॥ ४६ ॥

**नोअजीवश्च नोजीवो न जीवाजीवयोः पृथक् । देशप्रदेशौ नास्येष्टाविति विस्तृतमाकरे ॥ ४७ ॥**

"नो"इति नोअजीवो नोजीवश्चैतन्नये जीवाजीवयोर्वक्तव्ययोः सतोः पृथक् न–पार्थक्यं नापद्यते, यतोऽस्य नयस्य देशप्रदेशौ नेष्टाविति, नोशब्दः सर्वनिषेधार्थ एव घटते, इत्येतदाकरे–अनुयोगद्वारादौ विस्तृतम् ॥ ४७ ॥

इत्थं स्वसमयसिद्धामेवम्भूतनयार्थप्रक्रियामुपपाद्य तया दिगम्बरोक्तप्रक्रियां दूषयति ।

**सिद्धो निश्चयतो जीव इत्युक्तं यद्दिगम्बरैः । निराकृतं तदेतेन यन्नयेऽन्त्येऽन्यथा प्रथा ॥ ४८ ॥**

"सिद्ध" इति एतेन–पूर्वोक्तेन सिद्धो निश्चयतो जीव इति यद्दिगम्बरैरुक्तं "तिक्काले च दु पाणा इंदियबलमाउ आणपाणे य । ववहारो सो जीवो णिच्छयदो दु चेदणा जस्स"॥१॥इत्यादिना तन्निराकृतं यत्–यस्मात्, अन्त्ये–एवम्भूतनये, अन्यथा प्रथा–सिद्धोऽजीव इत्येव प्रसिद्धिः शुद्धनिश्चयश्च स एव, इति कथं निश्चयतः सिद्धो जीव इति वक्तुं शक्यमिति ॥

नन्वेवम्भूतः पर्यायार्थिकेष्वेव शुद्धनिश्चयस्तेनास्मदुक्तानुपपत्तावपि द्रव्यार्थिकप्रभेदेन सर्वसङ्ग्रहनयेन शुद्धनिश्चयेन तदुपपादयिष्यामः इत्याकाङ्क्षायामाह ।

**आत्मत्वमेव जीवत्वमित्ययं सर्वसङ्ग्रहः । जीवत्वे प्रतिभूः सिद्धसाधारण्यं निरस्य न ॥ ४९ ॥**

"आत्मत्व"मिति आत्मत्वमेव जीवत्वं—जीवपदप्रवृत्तिनिमित्तं, पारिणामिकभावस्य कालत्रयानुगतत्वेन सत्यत्वात्, औदयिकभावस्य चौपाधिकत्वेन कालत्रयाननुगतत्वेन च तुच्छत्वात्, इति अयं सर्वसङ्ग्रहनयः[तु] सिद्धसाधारण्यं भवस्थतौल्यं निरस्य जीवत्वसाधने न प्रतिभूः, सर्वत्र तुल्यजीवत्वात् एवं एको व्यवहारतो जीवोऽन्यश्च निश्चय (त) इति विभागकरणमसमीक्षिताभिधानमेवापद्येत, सर्वसङ्ग्रह एव हि कर्म्मोपाधिनिरपेक्षशुद्धद्रव्यार्थिकस्तेन च संसारिचैतन्यमपि निरुपरागं शुद्धमिति परिणेष्यत एव, तदुक्तं द्रव्यसङ्ग्रहे "मग्गणगुणठाणेहि य चउदस य हवंति तह असुद्धणया। विण्णेया संसारी सव्वे सुद्धा उ सुद्धणया॥१॥" इति, नच संसारिचैतन्यस्य सङ्ग्रहनयेन शक्त्या शुद्धचैतन्यनिश्चयेऽपि व्यक्त्या शुद्धचैतन्यस्य सिद्ध एव निश्चयान्न साधारण्यमिति शङ्कनीयं, सङ्ग्रहस्य शक्तिग्राहकत्वेन व्यक्तिग्राहकताया व्यवहार एव विश्रान्तेः, निश्चयतो द्विचेतनाशाली सिद्ध एव जीव इत्यस्य व्याघातात् ॥ ४९ ॥

नन्वेवं निश्चयतः सिद्धस्याजीवत्वे भवन्निरिष्यमाणे भवतामेव ग्रन्थे संसारिसिद्धसाधारणजीवपदार्थाभिधानं कथम् ? इत्याशङ्कायामाह ।

**यज्जीवत्वं क्वचिद् द्रव्यभावप्राणान्वयात्स्मृतम् । विचित्रनैगमाकूतात् तज्ज्ञेयं नतु निश्चयात् ॥ ५० ॥**

"य"दिति यज्जीवत्वं क्वचिद् ग्रन्थे, द्रव्यप्राणानां भावप्राणानां अन्वयात्—एकीकरणात स्मृतं संसारिसिद्धसाधारण्यमिति शेषः, तद्विचित्रो—विविधावस्थो यो नैगमः तस्याकूतात्—अभिप्रायात् ज्ञेयं, नतु निश्चयादेवम्भूतनयात्, तथाचैवम्भूत

नयेनैव सिद्धमजीवं वयं प्रतिजानीमहे, नतु नयान्तराभिमतेन जीवत्वेऽपि विप्रतिपद्यामहे, इति शुद्धाशुद्धेन नैगमनयेन साधारणजीवत्वाभ्युपगमेऽपि न क्षतिः। इयाँस्तु विशेषः, प्रसिद्धनैगमः औदयिकभावोपलक्षितं आत्मत्वाख्यं पारिणामिकभावमेव जीवपदप्रवृत्तिनिमित्तमभ्युपैति, तत्तद्विशेषश्च कश्चिदुपचारोपजीवी द्रव्यभावप्राणान्यतरवत्त्वेनानुगतमौदयिकक्षायिकभावद्वयमिति नेदं सिद्धान्तार्णवे नयविकल्पकल्लोलवैचित्र्यं तत्संप्लवव्यसनिनां विक्षोभावहम् ॥ ५० ॥

ननु 'जीव' प्राणधारण इत्यत्र भावप्राणधारणमेव धात्वर्थं विवक्षितत्वा(विवक्ष्य) निश्चयतः सिद्धस्य जीवत्वं समर्थयिष्यामः इत्याकांक्षायामाह ।

**धात्वर्थे भावनिक्षेपात् परोक्तं नच युक्तिमत् । प्रसिद्धार्थोपरोधेन यन्नयान्तरमार्गणा ॥ ५१ ॥**

"धात्वर्थे" इति धात्वर्थे–जीवत्यर्थे, भावनिक्षेपात्–भावसङ्केतग्रहात्, परोक्तं–निश्चयतः सिद्ध एव जीवः इति दिगम्बरोक्तं, नच–नैव युक्तिमत्, यत्–यस्मात्प्रसिद्धो–अनादिधातुपाठादिप्रतीयमानो योऽर्थस्तदनुरोधेन नयान्तरस्य मार्गणा विचारणा भवति, तथाच यादृशधात्वर्थमुपलक्षणीकृत्येतरनयार्थप्रतिसन्धानं तादृशधात्वर्थप्रकारकजिज्ञासयैव (प्रसङ्गसङ्गत्यैव(नयरहस्यतः) म्भूताभिधानस्य साम्प्रदायिकत्वात् न तत्र भावनिक्षेपाश्रयणमित्यर्थः, अन्यथा तत्रापि निक्षेपान्तराश्रयणेऽनवस्थानात् प्रकृतमात्रापर्य्यवसानादन्ततो ज्ञानाद्वैते शून्यतायां वा पर्य्यवसानात्, किञ्चैतादृगुपरितनैवम्भूतस्य प्राक्तनैवम्भूताभिधानपूर्वमेवाभिधानं युक्तम्, अन्यथाऽप्राप्तकालत्वप्रसङ्गात्, तस्मात् व्यवहाराद्यभिमतव्युत्पत्त्यनुरोधेनौदयिकभावमात्रग्राहकत्वमेवास्य सूरिभिरुक्तं युक्तमिति स्मर्त्तव्यम्। नचेन्द्रियरूपप्राणानां क्षायोपशमिकत्वात्कथमेवम्भूतस्यौद

यिकभावमात्रग्राहकत्वमित्यप्याशङ्कनीयम् प्राधान्येनायुःकर्म्मोदयलक्षणस्यैव जीवनार्थस्य ग्रहात्, उपहतेन्द्रियेऽप्यायुरुदयेनैव जीवनिश्चयादिति दिक् ॥ ५१ ॥

शङ्काशेषमुपन्यस्य परिहरति ।

**शैलेश्यन्त्यक्षणे धर्म्मो यथा सिद्धस्तथाऽसुमान्। वाच्यं नेत्यपि यत्तत्र फले चिन्तेह धातुगा ॥ ५२ ॥**

"शैलेश्यन्त्यक्षण" इति शैलेश्या–अयोगिगुणस्थानस्यान्त्यक्षणे–चरमक्षणे, यथा निश्चयतो धर्म्मः, तदर्वाक्तनकालभावी तु व्यवहारत एव, तदुक्तं धर्म्मसङ्ग्रहण्यां हरिभद्राचार्य्यैः—"सो उभयक्खयहेऊ सेलेसीचरमसमयभावी जो। सेसो पुण णिच्छयओ तस्सेव पसाहगो नेओ॥२६॥" तथाऽसुमान्–जीवोऽपि निश्चयतः सिद्ध एव भविष्यतीत्यपि न वाच्यं, यतस्तत्र 'सो उभयक्खयहेऊ'इतिगाथायां धारयति सिद्धिगतावात्मानमिति धर्म्म इति फले–फलरूपे धात्वर्थे चिन्ता, सा च कुर्वद्रूपत्वेन कारणत्वं वदत एवम्भूतनयस्य मते शैलेश्यन्त्यक्षण एव धर्म्मपदार्थसिद्धिसाक्षिणी, तदनन्तरं सिद्धिसाधारणरूपा सा फलाऽव्यवधानात् इह तु धातुगा धात्वर्थावच्छिन्नस्वरूपविषयिणी चिन्ता, साच केन सहाव्यवधानं गवेषयेत ? स्वरूपं तु प्रसिद्ध्यनुरोधेन संसारिण्येव पर्य्यवसाययेत् न तु सिद्ध इति महान् विशेषः। स्यादेतत् धर्म्मपदेऽपि धात्वर्थो धारणसामान्यमेव, तच्च यथा विशेपतातपर्य्यवशात्सिद्धि[सा]धारणरूपविशेषे पर्य्यवस्यति, तथा जीवपदार्थोऽपि विशेषे पर्य्यवस्यन् सिद्ध एव दत्तपदो भविष्यति? मैवं, 'जीव' प्राणधारण इत्यत्र प्राणपदसम(भि)व्याहृतधारणस्य भूरिप्रयोगवशादौदयिकप्राणधारण एव पर्य्यवसानात्, अत एव गोपदस्य नानार्थत्वेऽपि ततो भूरिप्रयोगवशात्सास्नादिमत एवोपस्थितिः, अश्वादेस्तु पदान्तर

समभिव्याहारादिनेति तु ताम्त्रिकाः। तदेवमेवम्भूतनयाभिप्रायेण सिद्धो न जीव इति व्यवस्थापितम् । यदि पुनः प्रस्थकन्यायाद्विशुद्धतरनैगमभेदमाश्रित्य प्रागुक्तस्वग्रन्थगाथा व्याख्यायते परैः, तदा न किंचिदस्माकं दुष्यतीति किमल्पीयसि रवतरक्षोदेन ॥ ५२ ॥

ऐन्द्रीततिः प्रणयपुण्यमिवाङ्कुराग्रैर्यत्पादपद्मकिरणैः कलयत्युदीतं । स्नात्राम्भसा दलितयादवदुष्टकष्टं शङ्खेश्वरं प्रभुमिमं शरणीकरोमि ॥ ५२ ॥ एवं सामान्यतः सप्तानामपि नयानामर्थानुक्त्वा ततः शुद्ध्यशुद्धिज्ञानोपायं वक्तुं प्रक्रमते ।

**उक्ता नयार्थास्तेषां ये, शुद्ध्यशुद्धी वदेत् सुधीः । ते प्रदेशप्रस्थकयोर्वसतेश्च निदर्शनात् ॥ ५३ ॥**

"उक्ता" इति स्पष्टोऽयं नवरं निदर्शनादिति जात्यपेक्षमेकवचनं प्रदेशप्रस्थकवसतिदृष्टान्तैर्नयानां शुद्ध्यशुद्धी विभावनीये इत्यर्थः ॥ ५३ ॥

तत्र पूर्वं प्रदेशदृष्टान्तं विवेचयति । तथा हि—

**धर्म्माधर्म्माकाशजीवस्कन्धानां नैगमो नयः । तद्देशस्य प्रदेशश्चेत्याह षण्णां तमुच्चकैः ॥ ५४ ॥**

"धर्म्मे"त्यादि नैगमो नयः धर्म्मास्तिकायाऽधर्म्मास्तिकायाकाशास्तिकायजीवास्तिकायस्कन्धानां, तद्देशस्य (च) प्रदेश इति षण्णां तम्—प्रदेशमुच्चकैः स्वमतनिर्बंधेनाह ॥ ५४ ॥

**दासेन मे खरः क्रीतो दासो मम खरोऽपि मे । इति स्वदेशे स्वाभेदात्पञ्चानामाह सङ्ग्रहः॥ ५५ ॥**

"दासेने"ति सङ्ग्रहनयस्तु दासेन मे खरः क्रीतो, दासो मम खरोऽपि मे इति न्यायात्स्वदेशे—धर्म्मास्तिकायादिदेशे स्वाभेदात्—धर्म्मास्तिकायाद्यभेदात् पञ्चानां प्रदेशमाह, षण्णां भेदानां पञ्चसु सङ्ग्रहादत्र सङ्ग्रहस्यान्वर्थत्वम्, क्रयजन्यं दासनिष्ठं खरस्वामित्वं यथा परम्परासंबन्धेन तत्स्वामिनिष्ठतया सङ्ग्रहीतुं शक्यं, तथा धर्म्मास्तिकायादिदेशवृत्तिप्रदेशाश्रयत्वं परम्परासम्बन्धेन धर्म्मास्तिकायादिनिष्ठतयेति परमार्थः । पञ्चानां वृक्षाणां तद्देशस्य च 'छाया' इत्यत्रेव देशान्वययोग्ये देशान्वयस्य निराकाङ्क्षत्वात्सङ्ग्रहनयमतेन षण्णां प्रदेश इत्यन्ये ॥ ५५ ॥

**व्यवहारस्तु पञ्चानां, साधारण्यं न वित्तवत् । इति पञ्चविधो वाच्यः, प्रदेश इति मन्यते ॥ ५६ ॥**

"व्यवहारस्त्वि"ति व्यवहारनयस्त्विवति मन्यते यथा पञ्चानां वित्ते साधारण्यं स्वामित्वं, तथा प्रदेशेन साधारण्यं पञ्चवृत्तित्वमिति, पञ्चानां प्रदेश इति न वाच्यं, किन्तु पञ्चविधः प्रदेश इति वाच्यमिति । पञ्चानां प्रदेश इति यदि पञ्चत्वपर्याप्तिमद्वृत्तित्वमादाय प्रयुज्यते, तदा न तत्र कुत्रापि प्रदेश इत्ययोग्यत्वं । यदि च पञ्चत्वाश्रयवृत्तित्वमादाय प्रयुज्यते, तदा पञ्चानां धर्म्मास्तिकायप्रदेश इत्यपि स्यादित्येवं सङ्ग्रहमतं दूषणीयमित्येतत्तात्पर्य्यं । नन्वेवं घटपटयो रूपमित्यपि न स्यादिति चेत् ? न स्यादेव, समुदितवृत्तित्वबोधायैव व्यवहारसामर्थ्यात्, घटपटोभयसम्बन्धिना उभयप्रकारं रूपमित्याकारस्यैव व्यवहारनयजन्यबोधस्य तत्रोपपत्तेः[2] ॥ ५६ ॥

---

१ द्वित्वाश्रयवृत्तित्वबोधे तयोर्घटरूपमित्यस्यापि आपत्तेः द्विवृत्तित्वबोधे च प्रकृतप्रयोगस्याप्यनापत्तेरिति ( नयरहस्यतः ) २ सङ्ग्रहाश्रयणात्तु सामान्यत एव साकाङ्क्षत्वात् स्यादपि ( नयरहस्यतः )

प्रदेशप्रस्थकवसतिदृष्टान्तैर्नयानां शुद्ध्यशुद्धिविचारः

**पञ्चप्रकारः प्रत्येकं पञ्चविंशतिधा भवेत् । प्रत्येकवृत्तौ प्राक्पक्षः स्याद् गेहेष्विव वाजिनां ॥ ५७ ॥**

"पञ्चप्रकार" इति पञ्चविधः प्रदेश इति यद् व्यवहारनयेन स्वीक्रियते, तत्र किं पञ्चविधत्वम् ? पञ्चप्रकारत्वमिति चेत्, कः प्रकारः ?, सङ्ख्या वा १ बुद्धिविशेषविषयत्वं वा २ भेदो वा ३ ? नाद्यः, अनन्तेषु प्रदेशेषु पञ्चसङ्ख्याधारणाऽसिद्धेः न द्वितीयः, पञ्चत्वप्रकारकबुद्धिविषयत्वस्य प्रत्येकमभाविनः पञ्चस्वप्यभावात्, प्रत्येकं भावे चैकैकः प्रदेशः पञ्चविध इति पञ्चविंशतिधा भवेत् । न च सामान्यतस्तदन्वयान्न वाध इति वाच्यं, विशेषविनिर्मोकेण तदसिद्धेः, यदि च 'गेहेषु शतमश्वा इत्यत्रेव प्रत्येकवृत्तित्वान्वयः प्रकृते स्वीक्रियते, तदा प्राक्पक्षः—पञ्चानां प्रदेश इति सङ्ग्रहनयपक्ष एव परिस्कृतः स्यात्तथा च स्वप्रतिज्ञासन्न्यासो निग्रहस्थानम् ॥ ५७ ॥

**प्रत्येकवृत्तिः साकांक्षा वहुत्वेनेति सोऽप्यसत् । ऋजुसूत्रस्ततो ब्रूते प्रदेशभजनीयतां ॥ ५८ ॥**

"प्रत्येके"ति किञ्च गेहेषु शतमश्वा इत्यत्र गेहवृत्तिवहुत्वव्यापकैकत्वावच्छिन्नपर्याप्तवृत्त्यवच्छेदकैकत्व ( वत् ) पञ्चकवान् प्रदेश इति वोधो वाच्यः, सच न सम्भवति, पञ्चपदसमभिव्याहृतवहुवचनान्तप्रदेशपदोपादान एव तथा वोधसम्भवात्, यदि च गृहशतेऽश्वा इतिवदत्र तात्पर्य्यविशेषेणोक्तवोधसम्भवः इतीष्यते तथापि प्रत्येकवृत्तिवहुत्वेन वहुवचनेन साकांक्षेति सोऽपि पक्षोऽसन्, नह्युक्तवोधार्थं गृहशतेऽश्वा इतिवत् गृहशतेऽश्व इति कश्चित्प्रयुङ्क्ते, तद्वत्पञ्चानां प्रदेश इत्युपदर्शितदिशाऽपि न युक्तः प्रयोगः, इति निर्गलितार्थः । तृतीयस्तु पक्षो न युक्तः, उक्तातिरिक्तभेदासिद्धेः । तत ऋजु-

"दासेने"ति सङ्ग्रहनयस्तु दासेन मे खरः क्रीतो, दासो मम खरोऽपि मे इतिन्यायात्स्वदेशो—धर्म्मास्तिकायादिदेशे स्वाभेदात्—धर्म्मास्तिकायाद्यभेदात् पञ्चानां प्रदेशमाह, षण्णां भेदानां पञ्चसु सङ्ग्रहादत्र सङ्ग्रहस्यान्वर्थत्वम्, क्रयजन्यं दासनिष्ठं खरस्वामित्वं यथा परम्परासंवन्धेन तत्स्वामिनिष्ठतया सङ्ग्रहीतुं शक्यं, तथा धर्म्मास्तिकायादिदेशवृत्तिप्रदेशाश्रयत्वं परम्परासम्बन्धेन धर्म्मास्तिकायादिनिष्ठतयेति परमार्थः। पञ्चानां वृक्षाणां तद्देशस्य च 'छाया' इत्यत्रेव दृश्यन्वययोग्ये देशान्वयस्य निराकाङ्क्षत्वात्सङ्ग्रहनयमतेन षण्णां प्रदेश इत्यन्ये ॥ ५५ ॥

**व्यवहारस्तु पञ्चानां, साधारण्यं न वित्तवत् । इति पञ्चविधो वाच्यः, प्रदेश इति मन्यते ॥ ५६ ॥**

"व्यवहारस्त्व"ति व्यवहारनयस्त्ववति मन्यते यथा पञ्चानां वित्ते साधारण्यं स्वामित्वं, तथा प्रदेशेन साधारण्यं पञ्चवृत्तित्वमिति, पञ्चानां प्रदेश इति न वाच्यं, किन्तु पञ्चविधः प्रदेश इति वाच्यमिति। पञ्चानां प्रदेश इति यदि पञ्चत्वपर्याप्तिमद्वृत्तित्वमादाय प्रयुज्यते, तदा न तत्र कुत्रापि प्रदेश इत्ययोग्यत्वं। यदि च पञ्चत्वाश्रयवृत्तित्वमादाय प्रयुज्यते, तदा पञ्चानां धर्म्मास्तिकायप्रदेश इत्यपि स्यादित्येवं सङ्ग्रहमतं दूषणीयमित्येतत्तात्पर्यं। नन्वेवं घटपटयो रूपमित्यपि न स्यादिति चेत् ?[1] न स्यादेव, समुदितवृत्तित्वबोधायैव व्यवहारसामर्थ्यात्, घटपटोभयसम्बन्धिना उभयप्रकारं रूपमित्याकारस्यैव व्यवहारनयजन्यबोधस्य तत्रोपपत्तेः[2] ॥ ५६ ॥

---

१ द्वित्वाश्रयवृत्तित्वबोधे तयोर्घटरूपमित्यस्यापि आपत्तेः द्विवृत्तित्वबोधे च प्रकृतप्रयोगस्याप्यनापत्तेरिति ( नयरहस्यतः ) २ सङ्ग्रहाश्रयणात्तु सामान्यत एव साकाङ्क्षत्वात् स्यादपि ( नयरहस्यतः )

त्वोक्तिरिति ध्येयम्, इत्येवं समासद्वयशुद्धिमान् शब्दनयः प्राह, न चैवं धर्मे धर्मो वा प्रदेशो नोद्रव्यमित्यपि स्याद-निर्द्धारितसामान्यैकव्यक्तिविधेयतायामेव नोशब्दप्रयोगात्, धर्मास्तिकायाद्येकव्यक्तेर्निर्द्धारिताया एव विधेयत्वा-दिति ध्येयम् ॥ ६० ॥

ब्रूते समभिरूढस्तु भेदासेर्नात्र सप्तमी । देशप्रदेशनिर्मुक्तमेवम्भूतस्य वस्तु सत् ॥ ६१ ॥

"ब्रूत" इति समभिरूढनयस्तु धर्म्मे प्रदेश इत्यादिसप्तमीसमासं ( न ) ब्रूते, तथा प्रयोगे "कुण्डे वदरम्" इत्यादेरिव भेदासेः—भेदबुद्धिप्रसङ्गात्, "घटे घटस्वरूपम्" इत्यादौ क्वचिदभेदे सप्तमीप्रयोगेऽप्यभेदप्रकारकबोधार्थं कर्म्मधारयस्यैवाव-श्याश्रयणीयत्वात्, तत्पुरुषे पदलक्षणासत्त्वात् कर्म्मधारये चाभेदस्य संसर्गविधयैव लाभात् तदभावेन लाघवादेव कर्म्म-धारयपक्षः समभिरूढनयेनाश्रीयते इत्यपरे, एतन्मूलकमेव निषादस्थपत्यधिकरणं मीमांसायां प्रवृत्तेः (त्तं), तथाहि "निषाद-स्थपतिं याजयेत्" इत्यत्र निषादानां स्थपतिरिति न षष्ठीसमासः, किन्तु निषादश्चासौ स्थपतिरिति कर्म्मधारयो लाघवात्, नचाध्ययनाभावादनधिकारो निषादस्य, एतद्विधिवलादेवैतदिष्टौ यावदपेक्षितपठनानुज्ञानात् यथा "वर्षासु रथकारो-ऽग्नीनादधीत" इत्यत्र, न चापशूद्राधिकरणविरोधः, तस्यैतदतिरिक्तविषयत्वात्, न चैवं "स्त्रीशूद्रौ नाधीयेताम्" इत्यत्र निषादीयतत्तदध्ययनविध्यर्थनिषेधबाधादध्ययनपदे निषादीयतत्तदध्ययलपरतया सङ्कोचः कल्प्यत इति शूद्रपदे एव निषा-देतरशूद्रपरतया सङ्कोचः किमिति न कल्प्यत इति शङ्कनीयं, निषादस्य वेदान्तराध्ययनप्रसङ्गात् । यदि च तत्पुरुषवत् कर्म्मधारयेऽपि स्यात्तदा षष्ठीसमास एव युज्येत त्रैवर्णिकस्यैव निषादस्थपतितया बोधनेनाप्राप्तविद्याप्रयुक्तेरकल्पनाज्ञि-

सूत्रनयः प्रदेशभजनीयतां ब्रूते, स्याद्धर्मास्तिकायस्य प्रदेशः स्यादधर्म्मास्तिकायस्येत्यादि विकल्पयतीत्यर्थः ॥ ५८ ॥

प्रदेशदृष्टान्तः

**भजनाया विकल्पत्वाद्व्यवस्थैवमपैति तत् । धर्म्मे धर्म्मः प्रदेशो वा धर्म्म इत्यादिनिर्णयः ॥ ५९ ॥**

"भजनाया" इति भजनाया विकल्परूपत्वादेवंसत्येकतरमादाय विनिगन्तुं शक्यत्वात् व्यवस्था–यो यदीयः प्रदेशः स तदीय एवेति लक्षणा, अपैति–अपगच्छति, धर्म्मास्तिकायादिप्रदेशस्याधर्म्मास्तिकायादित्वेनापि भजनीयत्वप्रसङ्गात् । नच वस्तुनि सत्त्वासत्त्वादिस्याद्वादभजनावदत्रोपपत्तिः, तत्राप्येकान्तासम्बलिताऽनेकान्ताश्रयणे विकल्पमात्रस्य दुर्वार-त्वात् , तद्वदेवात्र स्यात्पदेनैकान्तसम्बलमपि भविष्यतीति चेन्न, उद्देश्यविधेयविशेषपर्य्यवसानेन तस्य वक्ष्यमाण एव पर्य्य-वसानात् तत्–तस्मात्कारणाद्धर्म्मे–धर्म्मास्तिकाये यः प्रदेशः स धर्म्मो–धर्म्मास्तिकाय इति सप्तमीतत्पुरुषेण, धर्म्मास्ति-कायश्चासौ प्रदेशो धर्म्मास्तिकाय इति कर्म्मधारयेण वा निर्णयः कर्तव्यः । एवमादिनाऽधर्म्मेऽधर्म्म इति वा प्रदेशोऽधर्म्मः, आकाशे आकाश इति वा प्रदेश आकाश इति द्रष्टव्यम् ॥ ५९ ॥

**जीवे स्कन्धेऽप्यनन्ते नो शब्दादेशावधारणं । इति शब्दनयः प्राह समासद्वयशुद्धिमान् ॥ ६० ॥**

"जीव" इति जीवे स्कन्धेऽपि–अपिश्चार्थः जीवे स्कन्धे चानन्ते नोशब्दादेशावधारणं कर्त्तव्यं, जीवे जीव इति वा प्रदेशो नो जीवः स्कन्ध इति वा प्रदेशो नो स्कन्ध इत्यभिलापः कर्त्तव्य इत्यर्थः, धर्म्मास्तिकायादेरैक्यात्तत्प्रदेशस्य धर्म्मास्तिकायादिरूपता अनतिप्रसक्तेति तथोक्तिः, जीवस्कन्धयोस्तु प्रतिस्वमनन्तत्वात्कथमधिकृतप्रदेशस्य सकलसन्तानात्मकत्वसम्भव इति विवक्षितप्रदेशे सकलसन्तानैकदेशविवक्षितसन्तानात्मकत्वप्रतिपादनाय नोजीवत्वनोस्कन्ध-

त्वोक्तिरिति ध्येयम्, इत्येवं समासद्वयशुद्धिमान् शब्दनयः प्राह, न चैवं धर्मे धर्मो वा प्रदेशो नोद्रव्यमित्यपि स्याद-निर्द्धारितसामान्यैकव्यक्तिविधेयतायामेव नोशब्दप्रयोगात्, धर्मास्तिकायाद्येकव्यक्तेर्निर्द्धारिताया एव विधेयत्वा-दिति ध्येयम् ॥ ६० ॥

ब्रूते समभिरूढस्तु भेदासेर्नात्र सप्तमी । देशप्रदेशनिर्मुक्तमेवम्भूतस्य वस्तु सत् ॥ ६१ ॥

"ब्रूत" इति समभिरूढनयस्तु धर्म्मे प्रदेश इत्यादिसप्तमीसमासं ( न ) ब्रूते, तथा प्रयोगे "कुण्डे वदरम्" इत्यादेरिव भेदासेः–भेदबुद्धिप्रसङ्गात्, "घटे घटस्वरूपम्" इत्यादौ क्वचिदभेदे सप्तमीप्रयोगेऽप्यभेदप्रकारकबोधार्थं कर्म्मधारयस्यैवाव-श्याश्रयणीयत्वात्, तत्पुरुषे पदलक्षणासत्त्वात् कर्म्मधारये चाभेदस्य संसर्गविधयैव लाभात् तदभावेन लाघवादेव कर्म्म-धारयपक्षः समभिरूढनयेनाश्रीयते इत्यपरे, एतन्मूलकमेव निषादस्थपत्यधिकरणं मीमांसायां प्रवृत्तेः (त्तं), तथाहि "निषाद-स्थपतिं याजयेत्"इत्यत्र निषादानां स्थपतिरिति न षष्ठीसमासः, किन्तु निषादश्चासौ स्थपतिरिति कर्म्मधारयो लाघवात्, नचाध्ययनाभावादनधिकारो निषादस्य, एतद्विधिबलादेवैतदिष्टौ यावदपेक्षितपठनानुज्ञानात् यथा "वर्षासु रथकारो-ऽग्नीनादधीत" इत्यत्र, न चापशूद्राधिकरणविरोधः, तस्यैतदतिरिक्तविषयत्वात्, न चैवं "स्त्रीशूद्रौ नाधीयेताम्" इत्यत्र निषादीयतत्तदध्ययनविध्यर्थनिषेधबाधादध्ययनपदे निषादीयतत्तदध्ययनपरतया सङ्कोचः कल्प्यत इति शूद्रपदे एव निषा-देतरशूद्रपरतया सङ्कोचः किमिति न कल्प्यत इति शङ्कनीयं, निषादस्य वेदान्तराध्ययनप्रसङ्गात् । यदि च तत्पुरुषवत् कर्म्मधारयेऽपि स्यात्तदा षष्ठीसमास एव युज्येत त्रैवर्णिकस्यैव निषादस्थपतितया बोधनेनाप्राप्तविद्याप्रयुक्तेरकल्पनाञ्चि-

क्तिमिति कर्म्मधारय एवाद्रियते, अत्र शब्दनयानुसारिणो नव्याः तत्पुरुषे लक्षणापक्षेऽपि
पेधविधौ सङ्कोचाभावादिति । अथ शक्यसम्बन्धरूपलक्षणा- शक्तिलक्षणयोरुभयोरपि शाब्दबोधप्रयोजकतायाः क्लृप्तत्वेन गौरवानवकाशात्,
न तत्पुरुषः, शक्तिज्ञानादेव शाब्दबोधोपपत्तेर्न लक्षणा ज्ञानहेतुः कल्प्यते, गौरवादिति चेत् ? भवेदेवं
ज्ञाने विशेषणज्ञानविधया हेतोः ताद्दशबोधसहस्रस्याप्यनुभवसिद्धत्वादिति, यदि च साक्षात्परम्प-
यदि षष्ठीसमासेनापि कस्यचिद्बोधो न स्यात्, न चैवं, तदा न शक्तिविषयकत्वापेक्षया लक्ष-
रासाधारणसम्बन्धेन शक्तिज्ञानमेव शाब्दबोधसामान्ये हेतुरिति सूक्ष्ममीक्ष्यते,
णाविषयकत्वे गौरवमुद्भावयितुमपि शक्यं, सम्बन्धगौरवस्यादोषत्वात् । अथासति विशेषतो बाधके स्वशक्यार्थविधयैव
वेदानां प्रामाण्यं, न तु प्रमाणान्तराविषयेऽपि, लक्षणार्थविधयैवानादिमीमांसासम्प्रतिपत्तेरित्युच्यते तर्ह्यसति विशेषतो
बाधके कर्म्मधारयविधयैव वेदानां प्रामाण्यं, नतु प्रमाणान्तराविषयेऽपि, तत्पुरुषादिविधया तथैवानादिमीमांसासम्प्रति-
पत्तेरित्येव कल्पयित्वा किमिति न स्वचेतः सन्तोषयसि ? बहुव्रीहितस्तत्पुरुषस्य बलत्वे त्वयाप्यस्या एव रीतेरनुसर्तव्य-
त्वात्, नच बहुव्रीहेः सर्वपदार्थानां लाक्षणिकत्वादेव दौर्बल्यं, एकपदलक्षणयापि बहुव्रीहेस्तत्र तत्रापादितत्वादिति पक्षपा-
तमात्रमेवेति दिक् । एवम्भूतस्य नयस्य मते देशप्रदेशनिर्मुक्तं—देशप्रदेशकल्पनारहितमखण्डमेव वस्तु सत्, देशप्रदेशक-
ल्पना तु भ्रममात्रमिति तन्मते नास्त्येव प्रदेश इत्यर्थः । न च विन्ध्यहिमवदादिभावाभावावच्छेदकतया आकाशादिदे-
शसिद्धिः, परेण समं सम्बन्धस्यैव तेनानभ्युपगमात् । व्यवहारस्तु कल्पितेनापि वस्तुना निर्वहतीति न ततः परमार्थसिद्धि-
रिति भावः ॥ ६१ ॥ विवेचितः प्रदेशदृष्टान्तोऽथ प्रस्थकदृष्टान्तं विवेचयति प्रस्थकार्थमित्यादिना—

**प्रस्थकार्थं व्रजामीति वने गच्छन् व्रवीति यत् । आदिमो ह्युपचारोऽसौ नैगमव्यवहारयोः ॥ ६२ ॥**

"प्रस्थकार्थमि"त्यादि प्रस्थको मगधदेशप्रसिद्धो धान्यमानहेतुः द्रव्यविशेषः तदर्थं व्रजामीति वने गच्छन् यद् व्रवीति कश्चित् असौ नैगमव्यवहारयोः हि—निश्चितं, आदिम उपचारः ॥ ६२ ॥ नन्वत्र प्रस्थकार्थं वने गच्छतः प्रस्थकेच्छाया मुख्यार्थस्यावाधितत्वात्कथं प्रस्थकपदस्योपचारः इत्यत आह—

**अत्र प्रस्थकशब्देन क्रियाविष्टवनैकधीः । प्रस्थकेऽहं व्रजामीति ह्युपचारोऽपि च स्फुटः ॥ ६३ ॥**

"अत्रे"ति अत्राधिकृतप्रयोगे क्वेत्यधिकारणाकाङ्क्षायाः प्रस्थकार्थमिति चतुर्थीप्रकृत्यर्थेनैव निवृत्तेः प्रस्थ(क)दलयोग्यवृक्षप्राप्तिरूपक्रियाविष्टवनस्यैकाऽद्वितीया धीरिति तत्रोपचार आवश्यकः इत्यर्थः । ननु तथापि सप्तम्यन्तप्रश्ने सप्तम्यन्तमेवोत्तरमुचितमित्यत आह क्व भवान् गच्छतीति प्रश्ने प्रस्थकेऽहं व्रजामीति सप्तम्यन्तप्रस्थकपदस्योपचारोऽपि वने स्फुट एव दृश्यत इत्यर्थः, तथा च वनगमने प्रस्थकशब्देन वनाभिधानं नैगमव्यवहारयोः प्रथमः उपचार इति सिद्धम् ॥ ६३ ॥

**छिनद्मि प्रस्थकं तक्ष्णोम्युत्किराम्युल्लिखामि च । करोमि चेति तदनूपचाराः शुद्धताभृतः ॥ ६४ ॥**

"छिनद्मी"ति किं भवान् छिनत्तीति प्रश्ने प्रस्थकं छिनद्मीत्युत्तरे प्रस्थकपदस्य छेदयोग्ये काष्ठे उपचारः स पूर्वस्मात् शुद्धः, एवं क्रमेण किं भवान् तक्ष्णोति १ उत्किरति २ उल्लिखति ३ करोतीति ४ प्रश्नेषु प्रस्थकं तक्ष्णोमि १ उत्किरामि २ उल्लिखामि ३ करोमीत्युत्तरेषु ४ प्रस्थकपदस्य तक्षणादिक्रियायोग्यकाष्ठेषूपचारा यथोत्तरं भवन्तः क्रमेण शुद्धताभृतो भवन्ति । ननु सर्वत्र प्रस्थकपदस्य प्रस्थकयोग्यकाष्ठ एक एवोपचारस्तत्तत्क्रियाविशेषितार्थधीश्च तत्तत्क्रियावाचक-

पदसमभिव्याहारादेव भविष्यतीति कथमेतावन्त उपचारा यथाक्रमं शुद्धा उच्यन्ते इति चेत् ? सत्यं, "दुग्धमायुर्दध्यायुर्घृतमायुरि"त्यादौ दुग्धादिकारणे आयुःकार्य्योपचारस्यातिशयविशेषेण तारतम्यवत्प्रकृतेऽपि छेदनादिक्रियाव्यापारावेशेन तज्जन्या अवयवसंयोगादिविशेषजन्यतया वा विलक्षणेषु काष्ठद्रव्येषु काष्ठप्रस्थकपर्य्यायोत्पत्तिव्यवधानाव्यवधानाभ्यां प्रस्थकपदोपचारतारतम्यस्यानुभवसिद्धत्वात् ॥ ६४ ॥

**तमेतावतिशुद्धौ तूत्कीर्णनामानमाहतुः । चितं मितं तथा मेयारूढमेवाह सङ्ग्रहः ॥ ६५ ॥**

"तमि"ति अतिशुद्धौ त्वेतौ नैगमव्यवहारनयौ, तं प्रस्थकमुत्कीर्णनामानं प्रस्थकपर्य्यायवन्तं प्रस्थकमाहतुः उत्कीर्णनाम्नो द्रव्यादविशेषादिति भावः । सङ्ग्रहनयस्तु चितम्—आसादितप्रस्थकपर्य्यायं, मितम्—आकुट्टितनामानं मेयं धान्यविशेषमारूढं च प्रस्थकमाह, मेयारूढपदेन तदनारूढस्यान्यद्रव्याविशिष्टस्यासङ्ग्रहान्नैगमोपदर्शितार्थसङ्कोचकत्वेन स्वनाम्नोऽन्वर्थत्वसिद्धेः, अयं हि विशुद्धत्वात् कारणे कार्य्योपचारं कार्य्याकरणकाले प्रस्थकं च नाङ्गीकुरुते, नच तदा तस्य घटाद्यात्मकत्वप्रसङ्गः, तदर्थक्रियां विना तत्त्वायोगात्, घटादिशब्दार्थक्रिया यथाकथञ्चित्तत्रास्त्येवेति चेत् ? न, असाधारणतदर्थक्रियाकारित्वस्यैव तदात्मकत्वप्रयोजकत्वात्, तथापि प्रस्थकक्रियाविरहे नायं प्रस्थको घटाद्यनात्मकत्वाच्च नाप्रस्थक इत्यनुभयरूपः स्यात् ? न स्यात्, प्रतियोगिकोटौ स्वस्यापि प्रवेशेन यावद्घटाद्यनात्मकत्वासिद्धेः, अर्थक्रियाभावाभावाभ्यां द्रव्यभेदाभ्युपगमे ऋजुसूत्रमतानुप्रवेश इति चेत् ? न, नैगमनयोपगतार्थसङ्कोचनाय क्वाचित्कतथोपगमेऽपि सर्वत्र तथाभ्युपगमाभावेन तदननुप्रवेशात्, इत्थञ्चार्थक्रियाकारितदकारिप्रस्थकव्यक्तिभेदार्थं क्रियाजनक-

प्रस्थकव्यक्तौ प्रस्थकत्वसामान्यमपि नास्तीत्यभ्युपगमेऽपि न कश्चिद्दोषः, वस्तुतो व्यावृत्तिविशेषाद्यतिरिक्तेन नैयायिकादिकल्पितसामान्येन ( न ) क्वचिदपि निर्वाहस्तन्मते घटत्वादिसामान्यस्यापि समर्थयितुमशक्यत्वात्, मृत्स्वर्णरजतपाषाणादिघटेषु मृत्त्वस्वर्णत्वादिना साङ्कर्य्येण तदसिद्धेः, अस्तु मृत्त्वस्वर्णत्त्वादिव्याप्यं नानैव घटत्वं, कुलालस्वर्णकारजन्यतावच्छेदकतया तन्नानात्वस्यावश्यकत्वात्, नहि स्वर्णघटादौ चक्रादिकं मृद्घटादौ च लोहवर्तुलादिकं हेतुः, अनुगतधीस्तु कथञ्चिदसौ सादृश्यात्, घटपदं तु नानार्थकमित्यभ्युपगमे कथञ्चिदित्याद्यनिर्वचनेनैवाशक्तिः किमाविष्क्रियते अननुगतानां जातीनामिव व्यक्तीनामप्यसौ सादृश्येनैवानुगमसंभवेन जात्युच्छेदापत्तिः घटपदस्य नानार्थत्वे स्पष्ट एव, लौकिकव्यवहारबाधश्च । घटत्वादिकमेकत्ववृत्त्येव मृत्त्वादिकमेव वा तथा, कुम्भकारस्वर्णकारादेर्विजातीयकृतिमत्त्वेन चक्रादि-(लोह)वर्तुलादेश्च कथञ्चिद्विजातीयव्यापारकत्वेन हेतुत्वमित्यादिनवीनकल्पना तु दोषादेकत्वाग्रहेऽपि घटत्वादिग्रहात् एकत्वस्यैकत्वात् प्रसिद्धरूपेण कार्य्यकारणभावोच्छेदे व्यवहारविलोपाच्चानुपपन्नेति । नयविशेषेण तत्र तत्र व्यावृत्तिविशेषरूपसामान्याभ्युपगमं विना न निर्वाह इति । प्रकृते कार्य्याकरणकाले व्यावृत्तिविशेषरूपप्रस्थकत्वसामान्याभावाभ्युपगमे न क्षतिरिति किमतिप्रपञ्चितेन ॥ ६५ ॥

**प्रस्थकश्चर्जुसूत्रस्य मानं मेयमिति द्वयं । न ज्ञकर्तृगताद्भावाच्छब्दानां सोऽतिरिच्यते ॥ ६६ ॥**

"प्रस्थकश्चे"ति ऋजुसूत्रस्य मानं मेयं चेति द्वयमेव प्रस्थकस्वरूपं तन्मेयैधान्ये च समवहित एव प्रस्थकव्यवहारादे-

कतरविनाभावे तत्परिच्छेदासम्भवात्, किञ्च मेयारूढः प्रस्थकत्वेन व्यपदेश्य इति सङ्ग्रहनयमते मेयारूढः प्रस्थकारूढं मेयं वा तथेत्यत्र विनिगमकाभावादुभयत्रैव प्रस्थकपदशक्तेर्व्यासज्यवृत्तित्वं युक्तं, कथं तर्हि प्रस्थकेन धान्यं मीयत इति प्रयोगः, एकत्रोभयवाचकपदेनैकस्यानुपस्थापनादिति चेत् ? न, एतन्नयेन कथञ्चित्प्रस्थकपदशक्यतावच्छेदकस्य व्यासज्यवृत्तित्वेन विवक्षाभेदात्करणरूपानुप्रवेशस्यापि सम्भवान्न तदनुपपत्तिरिति द्रष्टव्यं। शब्दानां—शब्दसमभिरूढैवम्भूताख्यानां त्रयाणां नयानां मते स प्रस्थकः ज्ञकर्तृगतात् भावान्नातिरिच्यते—न भिद्यते, ज्ञश्च कर्त्ता च ज्ञकर्तारौ ज्ञकर्त्रोर्गतो ज्ञकर्तृगतस्तस्मादिति समासः, प्रस्थकाकारज्ञगतात्प्रस्थककर्तृगताद्वा प्रस्थकोपयोगादतिरिक्तं प्रस्थकं ते न सहन्ते, निश्चयमानात्मकप्रस्थकस्य जडवृत्तित्वायोगाद् बाह्यप्रस्थकस्याप्यनुपलम्भकाले असत्त्वेनोपयोगानतिरेकाश्रयणादन्ततो ज्ञानाद्वैतनयपर्य्यवसानाद्वा । नच ज्ञानाज्ञानात्मकत्वोभयनयविषयसमावेशविरोधात्प्रत्येकमनयत्वमाशङ्कनीयं, तादात्म्येनोभयरूपासमावेशेऽपि विषयत्वतादात्म्याभ्यां तदुभयसमावेशात्, विषयत्वमपि कथञ्चित्तादात्म्यमिति तु नयान्तराकूतं यदाश्रयेणार्थाभिधानप्रत्ययास्तुल्यनामधेया इति प्राचीनैर्गीयत इति दिक् ॥ ६६ ॥ विवेचितः प्रस्थकदृष्टान्तोऽथ वसतिदृष्टान्तं विवेचयति लोके चेत्यादिना—

लोके च तिर्यग्लोके च जम्बूद्वीपे च भारते । क्षेत्रे तद्दक्षिणार्द्धे च पाटलीपुरपत्तने ॥ ६७ ॥

"लोक" इति कुत्र भवान् वसतीति पृष्टेऽशुद्धनैगमव्यवहारवादी लोके वसामीति ब्रूते जीवद्रव्यस्थितिपर्य्यायविशेष-

रूपाया वसतेरधर्म्मास्तिकायव्याप्ताकाशत्वरूपलोकत्वस्यैव निरूपकतावच्छेदकत्वादत एवाकाशे वसामीति तस्य न प्राथमिकः प्रयोगः, शुद्धाकाशत्वस्यातथात्वात्, ततः शुद्धस्तु नैगमो व्यवहारो (वोर्द्धाध)स्तिर्यग्लोकभेदभिन्ने सर्वत्रापि किं भवान् वसतीति प्रश्ने तिर्यग्लोके वसामीत्युत्तरयति एवं यथोत्तरप्रश्नेषु यथोत्तरशुद्धा जम्वूद्वीपादि (दयः)॥ ६७ ॥

गृहे च वसतेः कोणं, नैगमव्यवहारयोः । अतिशुद्धौ तु निवसन् वसतीत्याहतुः स्म तौ ॥ ६८ ॥

"गृहे" इति गृहपर्य्यन्तवसतिविषया नैगमव्यवहारभेदा उदाहरणीयाः । नन्वाधारता आधारस्वरूपा तत्संयोगस्वरूपा वा उभयथापि गृहकोण इव लोकेऽप्येकक्षेत्रतया तदविशेषात् किं विशुद्धितारतम्यं, नह्यत्र प्रस्थकन्यायवद्गौणमुख्यकृतो विषयविशेषोऽस्तीति चेत् ? सत्यं, देवदत्तसंयोगपर्य्यायपरिणतगृहकोणक्षेत्रस्याखण्डक्षेत्राद्धर्म्मभेदादेशेन पृथक्कृतस्य यथाक्रमं गुरुगुरुतरविषये अभेदोपचारेण विशुद्ध्यपकर्षसम्भवात्, अन्यथा लोके वसामीत्यन्वयस्यैवानुपपत्तिः, नहि कृत्स्ने लोके देवदत्तवसतिरस्ति नच विनोपचारं कृत्स्नलोकरूढाल्लोकपदात्तद्देशोपस्थितिरस्ति, हन्तैवं वृक्षे कपिसंयोग इत्यत्राप्युपचारः स्यादिति चेत् ? कः किमाह स्यादेव, कथमन्यथा वृक्षे न किमपि संयोगः किन्तु तद्देश इति [विचारं मित्रः]अनुपचरितः प्रयोगः, शुद्धसम्बन्धव्यापकत्वविशिष्टसम्बन्धसंसर्गबोधतात्पर्य्यभेदादेवोभयोपपत्तिरिति चेत् ? तर्हि तादृशतात्पर्य्यभेद एवोपचारानुपचारप्रयोजकः आस्थीयतां, कार्य्यविनिर्मोकेणान्वयोपपत्तौ किं शुद्धद्वारेणेति चेत् ? देशाग्रहे तद्विनिर्मोक एव कथं पदशक्त्यनुपग्रहादिति चेत् ? न, स्कन्धपरस्य वृक्षपदस्यैकत्वपरिणतिरूपस्कन्धपदार्थेनैवोपग्रहात्, भेदविनिर्लुण्ठित एव वृक्ष-

पदार्थ आश्रीयत इति चेत् ? न, अनुभवबाधेन तथाश्रयणायोगादिति दिक् । प्रयोगे क्वेत्याद्याकाङ्क्षाबाहुल्याबाहुल्यकृतं विशुद्ध्यवशुद्धिवैचित्र्यमित्यन्ये, अतिशुद्धौ तु तौ नैगमव्यवहारनयौ वसन् वसतीत्याहतुः स्म, व्युपरताकाङ्क्षप्रयोगकर्तृत्वादनयोरतिविशुद्धत्वं ॥ ६८ ॥ ननु वसन् वसतीति वाक्यं गच्छन् गच्छतीति (वाक्य) वन्निराकाङ्क्षतयाऽप्रमाणमिति कथं तत्रातिविशुद्धत्वमित्याशङ्कायामाह—

**तदर्थस्तत्र तत्कालावच्छिन्ना तस्य वृत्तिता । वसत्यद्य न सोऽत्रेति व्यवहारौचिती ततः ॥ ६९ ॥**

"तदर्थः" वसन् वसतीत्यस्यार्थः, तत्र—पाटलीपुरे, तस्य—देवदत्तस्य, तत्कालावच्छिन्ना—वर्तमानकालावच्छिन्ना, वृत्तिता—स्वत्वप्रयुक्तयथेष्टविनियोगरूपा, तथाच वसन् वसतीत्यस्य वर्त्तमानकालावच्छिन्नवृत्तितावान् वसतीति क्रियारूपप्रतिपाद्य इति लक्षणयार्थः कर्त्तव्यः इत्यर्थः, ततः—तदर्थकरणादेव पाटलीपुरादेकस्मिन्दिने अन्यत्र गते देवदत्ते अद्य सोऽत्र न वसतीति व्यवहारस्यौचित्यं, अन्यथा पाटलीपुरपदे तद्गृहपदेऽपि (च) तद्वासितां (नां) देवदत्तस्य(च)[रूप](लक्षण)लक्षणां कालघटितामादाय स व्यवहारो न स्यादित्यर्थः ॥६९॥ नन्वेवमन्यत्र गतेऽप्ययं पाटलीपुरवासीति कथं व्यवहार इत्यत्राह—

**यत्त्वन्यत्र गतस्यापि तद्वासित्वं निगद्यते । तद्वासवृत्तिभागित्वे ज्ञेयं तत्त्वौपचारिकं ॥ ७० ॥**

"यत्त्वि"ति यत्त्वन्यत्र गतस्यापि, तद्वासित्वं—पाटलीपुरवासित्वं, निगद्यते तन्निगदन्तु, तद्वासवृत्तिभागित्वे—पाटलीपुरवासप्रयुक्तवृत्तिभागित्वे औपचारिकं—लाक्षणिकं ज्ञेयं, अत एवोभयत्र वासप्रयुक्तवृत्तिमत्यर्द्धवासित्वमपि व्यवह्रियते,

चहुकालप्रतिबद्धतद्गतगृहकुटुम्बादिस्वामित्व एव तत्र वस[न्] धातोर्लक्षणा, ततोऽपचत्यपि पाचक इति ( घत् ) प्रायेण-तत्रावसत्यपि तद्वासीति प्रयोगसम्भवेऽपि[अपचतीतिवदवसति वसतीत्यप्य]नानुपपत्तिः । नन्वित्वरकालीनवासप्रयुक्त-वृत्तिभागित्वेनापि वसतीति प्रयोगप्रसङ्गः, इत्यपि युक्तमाभाति ॥ ७० ॥

**सङ्ग्रहो वसतिं ब्रूते जन्तोः संस्तरकोपरि । ऋजुसूत्रः प्रदेशेषु स्वावगाहनकृत्सु खे ॥ ७१ ॥**

"सङ्ग्रह" इति सङ्ग्रहः—सङ्ग्रहनयो जन्तोः संस्तारकोपरि वसतिं ब्रूते—संस्तारकारूढ एव वसतीत्यभ्युपैति, अन्यत्र हि वासार्थस्यैवाघटमानत्वात्, अत एव मूले वृक्षः कपिसंयोगीत्यत्राप्येतन्मते मूलाभिन्नो वृक्षः कपिसंयोगीत्येवार्थः, अत एव चामूलं कपिसंयोगि(गी)न वृक्ष इति प्रतीति साम्मुख्यं, अत एव चोक्तप्रतीत्या संयोगस्य व्याप्यवृत्तित्वं नतु कर्म्मणस्तस्य देशवृत्तित्वस्वीकारादित्यादिप्राचीननैयायिकानामर्द्धजरतीयमपि निरस्तं, उभयत्रापि योगक्षेमतौल्यादिति दिक् । ऋजु-सूत्रः—ऋजुसूत्रनयः, खे—आकाशे स्वस्यावगाहनकृत्सु प्रदेशेषु वसतिं ब्रूते येष्वाकाशप्रदेशेषु देवदत्तोऽवगाढस्तेष्वेवायं तद्वा-समभ्युपैति, संस्तारके तद्वसत्यभ्युपगमे तु गृहकोणादावपि तदुपगमप्रसङ्गः, संस्तारकावच्छिन्नव्योमप्रदेशेषु संस्तारक एवा-वगाढो नतु देवदत्तोऽपीति न तेष्वपि तद्वसतिभणनमुपपद्यते इति स्वावगाहनपर्य्यन्तानुधावनं, संस्तारकगृहकोणादौ देव-दत्तवसतिव्यवहारस्तु प्रत्यासत्तिदोषोद्भ्रान्तिमूलक एवेत्येतदभिप्रायः ॥ ७१ ॥ तत्रापि विशेषमाह—

**तेष्वप्यभीष्टसमये न पुनः समयान्तरे । चलोपकरणत्वेनान्यान्यक्षेत्रावगाहनात् ॥ ७२ ॥**

"तेष्वपी"ति तेष्वपि—स्वावगाढेष्वाकाशप्रदेशेष्वप्यभीष्टसमये—विवक्षितवर्तमानकाले वसतिः, न पुनः समयान्तरे

भिन्नकाले अतीतानागतयोः कालयोरेतन्मते असत्त्वात्, तथा चलोपकरणत्वेन—वीर्य्यसंयोगसद्द्रव्यतया करणचापल्येन प्रतिसमयमन्यान्यक्षेत्रस्यापरापराकाशप्रदेशानामवगाहनात्तावदाकाशप्रदेशमात्रावगाहनायाः समयान्तरे अभावादित्यर्थः ७२ ॥

**स्वस्मिन्स्ववसतिं प्राहुस्त्रयः शब्दनयाः पुनः । एषानुयोगद्वारेषु दृष्टान्तनययोजना ॥ ७३ ॥**

"स्वस्मिन्नि"ति त्रयः शब्दनयाः—शब्दसमभिरूढैवम्भूताख्या नयाः पुनः स्वस्मिन् च वसतिं प्राहुः—स्वप्रदेशष्वेव स्वस्य मुख्याया वसतेः सम्भवात्, आकाशप्रदेशानामपि परद्रव्यत्वेन तत्र स्वसम्बन्धस्य विचार्य्यमाणस्याघटनादत एव दानं हरणादिकं तत्फलमपि चैते नयाः स्वात्मनिष्टमेव स्वीकुर्वन्तीति दिक् । एषानुयोगद्वारेषु दृष्टान्तनययोजना शब्दतोऽर्थतश्च दर्शितेत्यागममूलत्वादस्यां दृढविश्वासो विधेय इत्यैदंपर्यम् ॥ ७३ ॥ एतैर्दृष्टान्तैरयमस्मान्नयाच्छुद्ध इति कथं ज्ञेयमित्याह—

**शुद्धा ह्येतेषु सूक्ष्मार्थो अशुद्धाः स्थूलगोचराः । फलतः शुद्धतां त्वाहुर्व्यवहारे न निश्चये ॥ ७४ ॥**

"शुद्धाही"ति एतेषु नयेषूक्तदृष्टान्तरीत्या ये यतः सूक्ष्मार्थास्ते ततः शुद्धाः ये च यतः स्थूलगोचरास्ते ततोऽशुद्धाः सूक्ष्मत्वं स्थूलत्वं चार्थानां तादृशतादृशबुद्धिविषयत्वेनानुगमनीयं, नतु बह्वल्पविषयभावेन, तथासत्युत्तरोत्तरेभ्यः पूर्वपूर्वेषां सूक्ष्मार्थत्वप्राप्तेः, यत उक्तं "पूर्वः पूर्वो नयः प्रचुरगोचरः परः परस्तु परिमितविषयः १ सन्मात्रगोचरात्सङ्ग्रहान्नैगमो भावाभावभूमिकत्वात् भूमविषयः २ सद्विशेषप्रकाशकाद्व्यवहारतः सङ्ग्रहः समस्तसत्समूहोपदर्शकत्वाद्बहुविषयः ३ वर्त्तमानविषयाद् ऋजुसूत्राद्व्यवहारस्त्रिकालविषयालम्बित्वादनल्पार्थः ४ कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दाद् ऋजुसूत्रस्तद्विपरीत-

वेदकत्वान्महार्थः ५ प्रतिपर्य्यायशब्दमर्थभेदमभीप्सितः समभिरूढाच्छब्दस्तद्विपर्य्ययानुयायित्वात्प्रभूतविषयः ६ प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवम्भूतात्समभिरूढस्तदन्यथार्थस्थापकत्वान्महागोचरः इति" एवं सति ऋजुसूत्रादेर्व्यवहारस्य बह्वर्थत्वेन सूक्ष्मार्थत्वं स्यात्? इति बहुविचारसहत्वं सूक्ष्मार्थत्वं, अल्पविचारसहत्वं च स्थूलार्थत्वमित्यादिकं वा यथासमयं परिभाषणीयं, इत्थञ्च निश्चयनया एवैतेषु शुद्धा व्यवहारनयाश्चाशुद्धा इति फलितं, निश्चयत्वं च व्यवहारतदुपजीविनयान्यनयत्वं व्यवहारतदुपजीवितयान्यतरत्वमिति विवेकः, "अह वा सव्वणयमयं विणिच्छओ इगमयं च ववहारो" त्ति भाष्योक्तं पक्षान्तरं च निश्चयस्य सप्तभङ्ग्यादिविशेषिततयोपपादनीयं, अयं च निश्चयव्यवहारयोः शुद्धाशुद्धत्वोपन्यासः स्वरूपतः, फलतः शुद्धतां त्वभियुक्ता व्यवहारनये, न तु निश्चये, ॥ ७४ ॥ तथाहि—

**क्रियाऽक्रियाफलौचित्यं गुरुशिष्यादिसङ्गतिः । यत्र सम्यक्त्वहेतुः सा व्यवहारस्य देशना ॥ ७५ ॥**

"क्रिये"ति यत्र—बाह्यत्वानुगतात्मद्रव्यवादिनि नये क्रियाऽक्रियाफलयोरौचित्यं धर्म्मानुशासकतयोद्देश्यधर्म्मानुशासनफलयोगित्वादिना च गुरुशिष्यादिसङ्गतिः सा व्यवहारस्य देशना विनयवैयावृत्त्यादिशुभवार्य्योल्लासाधानेन सम्यक्त्वहेतुर्भवतीति ॥ ७५ ॥

**भुङ्क्तेऽन्यः कुरुते चान्यो गुरुः शिष्यश्च यत्र न । देशना निश्चयस्यास्य पुंसां मिथ्यात्वकारणं ॥ ७६ ॥**

"भुङ्क्ते" इति यत्र—कक्षीकृतक्षणिकत्वपक्षर्जुसूत्रादिनयवृत्तौ अन्य एव क्षणः कुरुते, अन्य एव च भुङ्क्ते, स्वरसत एवप्रतीत्योत्पद्यमानानां क्षणानामुपकार्य्योपकारकभावराहित्येन गुरुः शिष्यश्च यत्र नास्ति, अस्य—निश्चयनयस्य देशना पुंसां

[भवति]भवति प्रवृत्तिमूलव्यवहारोच्छेदनाहेतुः,तदुपजीविनां क्षणिकज्ञानवादिनां ब्रह्मवादिनां च मते सुतरामेव प्रवृत्तिमूलव्यवहारोच्छेदकत्वान्मिथ्यात्वं, ये हि कण्ठगतचामीकरन्यायेनातथाप्तत्वभ्रमादेव मुक्त्यर्थं प्रवृत्तिमिच्छन्ति तेषां वेदान्तशास्त्रादिवासनया मुक्तेरवाप्तत्वाभिमाने कुतः क्लेशमूलब्रह्मचर्य्याद्यनुभवनशीलनत्वं स्यादिति ॥ ७६ ॥ ननु सर्वत्र नाय मतिप्रसङ्गो भविष्यति, तथा "बुद्धाद्वैतस्वतत्वस्य यथेष्टाचरणं यदि । शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥ १ ॥" इत्यादिविचारवता शुद्धनयज्ञाननिष्ठावतापि व्यवहारापरित्यागात्, साधकेन च "आरुरुक्षोर्मुनेर्योगं कर्म्म कारणमुच्यते"इत्यादिवचनादेव समाधिसाधनत्वेन व्यवहारापरित्यागादित्याशङ्क्याह—

नग्नानामादौ निश्चयनयदेशना-मिथ्यात्व-कारणम्

**परिणामे नयाः सूक्ष्मा हिता नापरिणामिके । न वातिपरिणामे च चक्रिणो भोजनं यथा ॥ ७७ ॥**

"परिणाम" इति सूक्ष्माः—सूक्ष्मार्था नयाः परिणामे—ऐदंपर्य्यार्थश्रद्धायां हिताः—न पुनरपरिणामके उत्सर्गैकरुचौ पुरुषे, न वातिपरिणामकेऽपवादैकरुचौ, स्तोकाश्च परिणामका बहवश्च तदितरा इति स्वरूपतो बलवानपि निश्चयनयः स्तोकानामुपकारकत्वाद् बहूनां चापकारकत्वाच्चक्रवर्तिभोजनमिव फलतोऽनर्थनिबन्धनमिति भावः ॥ ७७ ॥

**आमे घटे यथा न्यस्तं, जलं स्वघटनाशकृत् । तथाऽपरिणते शिष्ये, रहस्यं नयगोचरं ॥ ७८ ॥**

"आमे घट" इति स्पष्टम् ॥ ७८ ॥

**पृथक्त्वे नाधिकारस्तन्नयानां कालिकश्रुते । अधिकारस्त्रिभिः प्रायो नये व्युत्पत्तिमिच्छतां ॥ ७९ ॥**

"पृथक्त्व" इति तत्—तस्मात्कारणाद्बहूपकारोद्देशेनैव देशनायाः प्रवृत्तेः, सूक्ष्मनयानां च बह्वनुपकारकत्वात्कालिकश्रुते

पृथक्त्वे–अनुयोगचतुष्टयपृथक्करणे सति, नयानां–सर्वेषां नयानामधिकारो नास्ति योजनायामिति शेषः, किं सर्वथैव नाधिकारो ? नेत्याह त्रिभिः–नैगमसङ्ग्रहव्यवहारैर्नयैः प्रायोऽधिकारो, व्युत्पत्तिमिच्छतां शिष्याणां हितमिति शेपस्तथाच पारमार्षं "एएहिं दिट्ठीवाए परुवणा सुत्तअत्थकहणाय। इह पुण अणब्भुवगमो अहिगारो तीहि उ भणंति" पृथक्त्वे ह्यविभागस्थैर्नयैः सूचनामात्रसन्निविष्टैः मूढनयिकम् श्रुतमिति न तत्र सर्वनयविवेचनाधिकारः, अपृथक्त्वे तु बहूनां शिष्याणां परिणामकत्वात्तद्धितो बहुत्वेन विभागस्थैर्नयैरमूढनये सूत्रे सर्वनयव्युत्पादनमासीदेवेति भावः, तदुक्तं—"मूढनइअं सुअं कालियं तु न णया समोअरंति इह। अपुहत्ते समोआरो नत्थि पुहत्ते समोआरो"त्ति यद्यप्याचार्यविनेयानां विशिष्टबुद्धिमपेक्ष्याखिलनयव्युत्पादनमैदंयुगीनानामप्यविरुद्धमेव तदुक्तं—"णत्थि नएहिं विहूणं सुत्तं अत्थो अ जिणमए किंचि आसज्ज उ सोआरं णए णयविसारओ बूया ॥ १ ॥ इति" तथापि निखिलपर्षदनुपकारित्वेन बहूनामपरिणामातिपरिणामजनकत्वेन चोक्तरीत्या सूत्रे सूक्ष्मनयोपन्यासो न क्रियत इत्यविरोधः ॥ ७९ ॥

**तेनादौ निश्चयोद्ग्राहो नग्नानामपहस्तितः । रसायनीकृतविषप्रायो सो न जगद्धितः ॥ ८० ॥**

"तेने"ति तेन–सूत्रोक्तरीत्युल्लङ्घनस्य कृतान्तकोपावहत्वेन, आदौ निश्चयोद्ग्राहो–निश्चयनयोपन्यासो, नग्नानां–दिगम्बराणामपहस्तितो–निराकृतः, न–यतोऽसौ निश्चयनयोपन्यासो निखिलनयैकवाक्यतापादकतात्पर्यार्थौपधेन रसायनीकृतविषप्रायस्तदवबोधवतः कस्यचिदेव हितो न तु जगद्धितो, जगद्धितश्च नयो व्यवहार एवेत्यादौ तदुपन्यासेन निश्चयमुपन्यस्तवतां दिगम्बराणामप्राप्तकालत्वादयो बहवो दोषाः ॥ ८० ॥

प्रेक्षावदुपकारितयैवादौ निश्चयनयोपन्यासोऽस्माकं फलवान्भविष्यतीत्याशङ्कायामाह—

**उन्मार्गकारणं पापा परस्थाने हि देशना । बालादेर्नान्ययोग्यं च वचो भेषजवद्धितं ॥ ८१ ॥**

"उन्मार्गे"ति परस्थाने–स्वाधिकारिभिन्नाधिकारिणि निमित्ते, हि–निश्चितं, देशना उन्मार्गकारणमिति हेतोः पापा, न खल्वपरिणतव्यवहारेषु मलिनवस्त्रेषु कुङ्कुमरागाधानवन्निश्चयनयदेशना शोभामावहति, नच बालादेर्मध्ये अन्ययोग्यं वचोऽन्यस्य भेषजवद्धितं, किन्त्वनर्थकारि, तस्मादादौ निश्चयोद्ग्राहो नग्नानामनर्थावह एव, तदिदमुक्तं षोडशकप्रकरणे "बालादिभावमेवं सम्यग् विज्ञाय देहिनां गुरुणा । सद्धर्म्मदेशनापि हि कर्त्तव्या तदनुसारेण ॥ १ ॥ यद्भाषितं मुनीन्द्रैः पापा खलु देशना परस्थाने । उन्मार्गनयनमेतद्भवगहने दारुणविपाकं ॥ २ ॥ हितमपि वायोरौषधमहितं तच्छ्लेष्मणो यथात्यन्तं । सद्धर्म्मदेशनौषधमेवं बालाद्यपेक्षमिति ॥ ३ ॥ एतद्विज्ञायैवं यथार्हं शुद्धभावसम्पन्नः । विधिवदिह यः प्रयुङ्क्ते करोत्यसौ नियमतो बोधिम् ॥ ४ ॥ ८१ ॥"

नन्वनादिकालीनव्यवहारवासनाजनितमात्मशरीराभेदभ्रममुन्मूलयितुं प्रवृतेः असच्छास्त्रे आदौ निश्चयोद्ग्राहः फलेग्रहिः–"सुदपरिचिदाणुभूदा सव्वस्स वि कामभोगबंधकधा । एगत्थस्सुवलंभो णवरि ण सुलभो विभत्तस्स" ॥ १ ॥ इत्यादिवचनात्, अत एव बुधादिविकलेनेदं कस्यचिदेवादेयं प्रवचनपरमगुह्यमितीतरशास्त्रेभ्यो विशिष्यत इति चेत्? तर्हि तादृशं समयप्राभृतादिकं हिङ्गुमरिचविक्रयकारिणां मुग्धवणिजामधीनं कुर्वद्भिर्भवद्भिः समीचीनं प्रवचनगुह्यमाघ्रातं, कथञ्च पदार्थपरिज्ञानादिव्यवहारव्युत्पत्तौ नैमिकेद्रव्यसङ्ग्रहादावप्यादौ निश्चयोपन्यासेन सूचिमुखे

नग्नानामादौ निश्चयनयदेशना-मिथ्यात्वकारणम्

मुशलप्रवेशनं व्यवसाय आयुष्मतो नोपहासकरः! कथं वा लौकिकव्यवहारजनितभ्रममुन्मूलयितुं लोकोत्तरव्यवहारमुत्पादनस्यैवावसरप्राप्तत्वेन तमुल्लङ्घ्य निश्चयव्युत्पादनस्य न क्रमविरुद्धता? न च व्यापकनिश्चयाभिधानोत्तरं व्यवहाराभिधानमेवात्र क्रमः, द्वयोरपि नयत्वेन भूमिक्रमानुरोधेनैवात्र क्रमाश्रयणात्, अन्यथा ह्यव्युत्पादितव्यवहारो दुष्प्राप्यव्युत्पत्तिकनिश्चयश्च शिष्यः फलसन्देहदोलाधिरोपणेन संसार एव भ्रामितः स्यात्, तदुक्तमन्यैरपि "अज्ञस्यार्द्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् । महानरकजालेषु स तेन विनिपातितः ॥ १ ॥"इति न च निश्चयाधिकारी प्रबुद्ध एव(न किं) त्वर्द्धप्रबुद्ध इति वाच्यं, आपातनिश्चयश्रद्धाजनिते क्रियाऽऽलस्यवतोऽर्द्धप्रबुद्धत्वेऽपि संशयादित्यभिप्रायवानाह—

**निश्चयान्निश्चयं ते न जानन्तीति श्रुते श्रुतं ॥ ८२ ॥**
**ये सीदन्ति क्रियाभ्यासे ज्ञानमात्राभिमानिनः ।**

"य" इति ये ज्ञानमात्राभिमानिनः ज्ञानमेवास्माकं सर्वां सामग्रीं सम्पादयिष्यतीति स्वेच्छाकल्पितसन्तोपवन्तः क्रियाभ्यासे सीदन्ति ते निश्चयान्निश्चयं न जानन्ति, किन्तु शव्दाभिलापादिरूपव्यवहारमात्रादेवेति श्रुते—ओघनिर्युक्त्याख्ये श्रुतं, तथा च तत्पाठः "णिच्छयमवलम्बंता णिच्छयओ णिच्छयं अयाणंता । णासंति चरणकरणं वाहिरकरणालसा केइ॥१॥" त्ति । किञ्च उत्तराध्ययनेऽप्युक्तं "भणिता अकरिंता य वंधमुक्खपइंन्निणो वायाविरियमित्तेणं समासासिंति अप्पयं॥१॥" त्ति । विषयस्वरूपानुवन्धैर्धर्म्मस्येव निश्चयस्यापि त्रैविध्यमन्वेषणीयं, तत्र विषयनिश्चयो निश्चयबुद्ध्या ब्रह्मैकान्तादिश्रवणम्, अनादिस्वरूपनिश्चयो जैनशास्त्रस्थनिश्चयनयग्रन्थपरिशीलनम्, अनुवन्धनिश्चयश्च प्रणिधिप्रवृत्तिविघ्नजयसिद्धिविनियोगपवित्रोत्तरतद्भाववृद्धिहेतुः व्यवहारक्रिया प्रवृत्तिरिति, सामर्थ्ये क्रियालसस्य निश्चयाभिमानो विशिष्टफलानावहत्वेन न ज्यायान् ।

न वा तदनुकूलकुवासनाधायकं दिगम्बरदर्शनमपीति किमतिविस्तरेण॥ ८२ ॥ उक्ते दृष्टान्तप्रदर्शनपूर्वं नयानां शुद्ध्यशुद्धी।
अथ निक्षेपनययोजनां प्रदर्शयन्नाह—

**इष्टः शब्दनयैर्भावो निक्षेपा निखिलाः परैः । मतं मङ्गलवादेऽन्यद्भिदां द्रव्यार्थिके त्रये ॥ ८३ ॥**

"इष्ट"इत्यादौ शक्यतावच्छेदकभेदेनैकस्य शब्दस्यानेकशक्तिप्रदर्शकं वचनं निक्षेपः, नचैवमनेकार्थनामानुशासनस्यापि निक्षेपत्वप्रसङ्गः, तत्त्वत इष्टत्वाद् व्यवहारतस्तु सिद्धान्ततदुपजीव्यन्यतरताद‍ृशवचनमेव निक्षेप उच्यते, न तु "लोकादि"ति सूत्रेणोपनीमानमपीत्यदोषः, तत्र शब्दनयैः—भावो भावनिक्षेप एवेष्टः, परैः—( अर्थनयैः निखिलाः अशेषा नामादयः चत्वारोऽपि इष्टाः तथाचोक्तम् ) "सव्वणिक्खेवे"त्ति ननु नैगमादीनां नामादिचतुष्टयाभ्युपगन्तृत्वे तेषां द्रव्यार्थिकत्वव्याहतिः स्यात्, द्रव्यार्थिकेन द्रव्यस्यैवाभ्युपगमात्पर्य्यायस्य प्रतिक्षेपात्, द्रव्यं प्रधानतया पर्य्यायं च गौणतयाऽभ्युपगच्छन् द्रव्यार्थिकोऽपि भावनिक्षेपसह इति चेत् ? हन्त तर्हि त्वदुक्तरीत्या शब्दनया अपि द्रव्यनिक्षेपसहाः प्राप्ता इति "भावं चियसद्दणया" इत्यादिप्रागुक्तभाष्यवचनसंवादव्याघात्, एतेन द्रव्यार्थिकपर्य्यायार्थिकयोर्द्वयोस्तुल्यवादेनोभयाभ्युपगमः, परं आद्यस्य सर्वथाऽभेदेनान्त्यस्य तु सर्वथा भेदेन, ततो नैकस्योभयविषयत्वे विषयान्तरग्रहार्थमन्यकल्पनानुपपत्तिः, भेदाभेदोपरागेणोभयग्रहार्थमुभयकल्पनावश्यकत्वादिति द्रव्यार्थिकस्यापि पर्य्यायसहत्वमित्यप्यपास्तं, एवं सति पर्य्यायार्थिकस्य शब्दादेरपि द्रव्यसहत्वापत्तेः, अत्यन्तभेदाभेदग्राहिणोर्द्वयोः समुदितयोरपि मिथ्याद‍ृष्टित्वात्, अत्यन्ताभेदे पर्य्यायद्वयासहोक्तिप्रसङ्गेन गुणो द्रव्यमिति द्रव्यार्थिकनयाभिलापानुपपत्तेः,

अत्यन्तभेदेऽपि पर्य्यायार्थिकेन द्रव्यग्रहे द्रव्यार्थिकस्यान्तर्गडुत्वप्रसक्तेः, एकस्मिन्द्रव्यपक्षे पर्य्यायार्थिकनयमतेऽपि द्रव्यं सामायिकमित्यस्याविरोधप्रसङ्गाच्चैतन्मतस्य भाष्यकृतैव निरस्तत्वाच्चेति चेत् ?अत्रेदं पर्य्यालोचयामः, अविशुद्धानां नैगमभेदानां नामाद्यभ्युपगमप्रवणत्वेऽपि विशुद्धनैगमभेदस्य द्रव्यविशेषणतया पर्य्यायाभ्युपगन्तृत्वान्न तत्र भावनिक्षेपानुपपत्तिः नचैवमस्य पर्य्यायार्थिकत्वापत्तिः, इतराविशेषणत्वरूपप्राधान्येन पर्य्यायानभ्युपगमात्, शब्दादीनां पर्य्यायार्थिकानां तु नैगमवद् विशुद्ध्यभावान्न नामाद्यभ्युपगन्तृत्वमिति, नन्वेतदपि पर्य्यालोचनं न पर्य्यालोचनान्तरसहं, स्वविषयविशुद्धिकृतापर्य्यायविषयताशालित्वस्य स्वविषयविशुद्धिप्रयुक्तपर्य्यायाविषयत्वविनिर्मोकस्य वा भावनिक्षेपसहत्वस्य सङ्ग्रहर्जुसूत्रयोरव्यापकत्वात्तज्जातीयेऽविशुद्ध्यभावेनोपसर्जनीकृतपर्य्यायविषयतया तच्छोधनस्य दुःसाध्यत्वात्, ईदृशस्य भावविषयत्वस्य सर्वानुगतत्वेन "सेसा इच्छंति सवणिक्खेवे" इत्यस्य व्याघातापातादिति चेत् ? न, भावार्थानवबोधात्, अन्त्यनैगमेनेतरविशेषणतया पर्य्यायो विषयीक्रियते इत्यस्यह्ययमर्थः पाश्चात्यनयात् विशेषोपयोगेन विशेषमनुभवतान्त्यनैगमेन शुद्धपर्य्यायविशिष्टं द्रव्यं विषयीक्रियते इत्ययं च न्यायः सङ्ग्रहर्जुसूत्रयोरपि विषयविशेषे सम्भवतीति नाव्यापकत्वं, स्वसजातीयेन वा शुद्धिप्रयुक्तविषयविशेषपर्य्यवसानसम्भावनापीति न कश्चिद्दोषः, इत्थञ्चैतदवश्यमभ्युपगन्तव्यम्, उक्तापेक्षां विना "दव्वट्ठिओ" त्ति(ए)क्को इत्यादिना द्वयोरप्युभयरूपानेकानुप्रवेशपाठसिद्धस्य तत्र भजनाकृतविशेषस्यानुपपत्तेरिति दिक्। ननु यद्येवं पर्य्यायार्थिके भावनिक्षेप एव, शेषेषु चत्वारोऽपि निक्षेपा अभिमतास्तदा मङ्गलवादे यदुक्तं—भाष्यकृता "णामाइतियं दव्वट्ठिअस्स भावो अ पज्जवणयस्स" त्ति तत्कथं सङ्गच्छते, तत्राह द्रव्यार्थिके भिदां त्रये—नामस्थापनाद्रव्य-

लक्षणे मङ्गलवादेऽभिहिते अन्यन्मतं पुरस्कृतमिति विशेषः, स्वातन्त्र्येणापि नामादित्रयविषयत्वमेव द्रव्यार्थिकस्येति तदभिप्रायेण मतान्तरेण तत्र तथोक्तिरित्यर्थः, अत एवोक्तं तत्त्वार्थवृत्तावपि "अत्र चाद्या नामादयस्त्रयो विकल्पा द्रव्यार्थिकस्य, तथा सर्वार्षत्वात् पाश्चात्यः पर्य्यायनयस्य तथापरिणतिविज्ञानाभ्यामिति" ॥ ८३ ॥ एतन्मतावष्टम्भकमाह—

**द्रव्यार्थे गुणवान् जीवः पर्य्यायार्थे च तद्गुणः । सामायिकमिति प्रोक्तं यद्दिशावश्यकादिषु ॥ ८४ ॥**

"द्रव्यार्थ" इति यद्दिशावश्यकादिषु ग्रन्थेषु द्रव्यार्थिकनये गुणवान् जीवः सामायिकं, पर्य्यायार्थिकनये च जीवस्य गुणः सामायिकमिति प्रोक्तं तन्मतमेतदित्यर्थः, अत्र द्रव्यपर्य्यायनययोः शुद्धद्रव्यपर्यायावेव विषयौ, तत्र पर्य्यायद्रव्ययोर्भिन्नयोः कुण्डलतापन्नं स्वर्णं पत्रस्य नीलतेत्यादाविव कल्पितयोर्विशेषणत्वं शब्दप्रयोगविषयत्वमिति भाष्यकृदभिप्रायः, मतान्तराभिप्रायेण तु पर्य्यायार्थिक एव द्रव्यस्य कल्पितस्य विशेषणत्वं, द्रव्यार्थिके तु प्रागुपदर्शितदिशा पर्य्यायस्याकल्पितस्यापि विशेषणत्वं न्याय्यमेव उभयविषयग्राहिणा नैगमेनोभयविषयस्य सत्यताया एवाभिमानात्, घटस्य रूपादय इति प्रयोगे प्रामाणिकत्वस्यैतन्मतेनैवोपपत्तेर्व्यवहारसङ्ग्रहयोरुद्भूतत्त्वानुद्भूतत्वाभ्यामेतत्समर्थनस्य नैगमनयानतिरेकदृष्ट्यैव मलयगिर्य्यादिभिरुक्तत्वात्, अत एवोक्तं देवसूरिभिः "धर्म्मयोर्धर्म्मिणोर्धर्म्मधर्म्मिणोश्च प्रधानोपसर्जनभावेन यद्विवक्षणं स नैकगमो नैगमः १ सच्चैतन्यमात्मनीति धर्म्मयोः २ वस्तुपर्य्यायवद्द्रव्यमिति धर्म्मिणोः ३, क्षणमेकं सुखी विषयासक्तजीव इति धर्म्मधर्म्मिणोरिति ४" अत्र हि प्रधानोपसर्जनभावो विशेष्यविशेषणभावेन न तु कल्पिततया, नचैवमस्य प्रमा-

णात्मकत्वानुषङ्गः धर्म्मधर्म्मिणोः प्राधान्येनात्र ज्ञप्तेरसम्भवात्, तयोरन्यतर एव हि नैगमेन प्रधानतयानुभूयते, प्राधान्येन द्रव्यपर्य्यायद्वयात्मकं चार्थमनुभवद्विज्ञानं प्रमाणं ज्ञेयं, नान्यत्, इत्यस्यार्थस्य तद्ग्रन्थ एव व्यक्तत्वात्, न वा नये विशेषणं कल्पितमेवेति प्राचीनमतेऽपि नियमः, "सावज्जजोगविरओ" इत्यत्र सङ्ग्रहनयस्वीकृतात्मसामान्यसामायिकविधिनियमनाय प्रवृत्तानां पर्यायशुद्धिमतां व्यवहारादिनयानां यावदेवम्भूतमुत्तरोत्तरपर्य्यायकदम्बकविशेषणोपरागेणैव प्रवृत्तिदर्शनात्, नच तत्र पर्य्यायनयानां सङ्ग्रहस्वीकृतविधिविशेषपर्य्यवसानार्थं पर्य्यायविशेषणमुद्रया प्रवृत्तावपि 'सविशेषण' इत्यादिन्यायाच्छुद्धपर्य्यायविधावेव तात्पर्य्यात्, स्वविषये अन्यनयार्थविशेषणस्य कल्पितत्वमेवेति वाच्यं, एवं सति सर्वविशेषणानामेकधर्म्माकाङ्क्षाविधुरत्वेन वाक्यभेदप्रसङ्गात्, नच नयवाक्यानां प्रत्येकं निराकाङ्क्षत्वेऽप्यवयवानां न्याय इव स्याद्वादे वाक्यैकवाक्यत्वं सर्वत्रैवोपपादयिष्याम इत्यपि साम्प्रतं, एकैकस्य शतभेदत्वेन सर्वत्रैकरीतेरभावाद्विशिष्टवैशिष्ट्यबोधस्य दुरपलापत्वात्, एवमपि नैगमे प्राच्यभेदातिशायकविशेषणस्याकल्पितत्वध्रौव्याच्चेति किमतिपल्लवितेन॥८४॥ तदेवं मतान्तरेण द्रव्यार्थिके नामादिनिक्षेपत्रयमेवेति समर्थितं, अथ भाष्यकारमतेनैव "णामाइतियं दव्वट्ठिअस्स भावो अपज्जवणयस्स" इति मङ्गलवादीयभाष्यप्रतीकस्य "भावं चियसद्दणया सेसा इच्छंति सव्वणिक्खेवे" इत्यग्रेतनवचनेन सहाविरोधं समर्थयन्नाह—

**घटोपयोगरूपो वा भावो द्रव्यार्थिकेऽमतः। तेन तत्र त्रयं प्रोक्तमिति जानीमहे वयम्॥ ८५॥**

"घटोपयोग" इति वेति पक्षान्तरे, घटोपयोगरूपो भावो द्रव्यार्थिकेऽमतः—अनिष्टः, तेन तत्र—मङ्गलवादे द्रव्यार्थिके

त्रयं–नामादिनिक्षेपत्रयं प्रोक्तं, ननु सर्वथाभावानभ्युपगमाभिप्रायेण जलाहरणादिपरिणतिरूपभावघटस्य द्रव्यार्थिकेना-
प्यभ्युपगमादिति वयं जानीमहे, तथा च भाष्ये पूर्वं शुद्धचरणरूपभावमङ्गलाधिकारप्रवृत्तेर्नैगमादिना जलाहरणादिरूप-
भावघटाभ्युपगमेऽपि घटोपयोगरूपभावघटानभ्युपगमात्तन्निषेधोक्तिः,अग्रे तु व्यवस्थाधिकारात् विशेषोक्तिरिति न विरोध
इति भावः,"जानीमहे" इत्यनेन स्वोत्प्रेक्षया सामान्यतो ज्ञातेऽप्यर्थे विशेषविवेके बहुश्रुताः प्रमाणमित्यभिव्यज्यते॥ ८५॥
उक्तं निक्षेपचतुष्टयं, प्रसिद्धं घटमेवोदाहरणीकृत्य विवेचयन्नाह—

**तत्र नामघटः क्लृप्तो घटनाम्ना पटादिकः । तच्चित्रं स्थापना द्रव्यं मृद्भावो रक्तादिकः ॥ ८६ ॥**

"तत्रे"ति तत्र निक्षेपचतुष्टयमध्ये घटनाम्ना क्लृप्तः पटादिकोऽपि नामघट उच्यते, नाम्ना घट इति व्युत्पत्तेः, तथाचै-
तल्लक्षणं "यद्वस्तुनोऽभिधानं स्थितमन्यार्थे तदर्थनिरपेक्षं । पर्य्यायानभिधेयं च नाम यादृच्छिकं च तथा ॥१॥" अयमेत-
दर्थः– यद्वस्तुनोः–जीवादेर्नाम–यथा गोपालदारकस्येन्द्र इति, 'स्थितमन्यार्थ' इति, परमार्थतस्त्रिदशाधिपेऽवस्थानात्,
तदर्थनिरपेक्षम्–इतीन्द्रार्थनिरपेक्षं'इदिपरमैश्वर्ये' इति धात्वर्थस्य गोपालकेऽभावात्,तथा पर्यायैः शक्रपुरन्दरादिभिःनाभिधी-
यते इति एवम्भूतं नाम, इह नामनामवतोरभेदोपचाराद्गोपालकवस्त्वेव नामोच्यते, तथान्यार्थेऽवर्तमानमपि किञ्चिद्यादृच्छि-
कं डित्थडवित्थादिवचनं चशब्दादित्वरं यावद्द्रव्यभावि च तद्ग्राह्यं, यत्तु णामं 'आवकहियं'ति सूत्रे प्रोक्तं तत्प्रतिनियत-
जनपदसंज्ञामाश्रित्यैवेति ध्येयम् । ननु गङ्गायां घोष इत्यत्र गङ्गापदेन गङ्गातीरमभिधीयते तत्र किं नामनिक्षेपस्य प्रवृत्तिरुत
निक्षेपान्तरस्य, नाद्यः, जाह्नव्यादिपर्य्यायाभिधेयत्वेन तत्र नामनिक्षेपाप्रवृत्तेः, नापि द्वितीयः, प्रसिद्धनिक्षेपान्तराविषये

तत्राप्रसिद्धनिक्षेपकल्पने तदियत्ताक्षतिप्रसङ्गादिति चेत् ? न, जत्थ य जं जाणिज्जा णिक्खेवं णिक्खिवे णिरवसेसं" इत्यनेन यथापरिज्ञानं निक्षेपान्तरकल्पनाया अप्यनुमतत्वेन दोषाभावात्, अस्तु वा तत्राभिप्रायकी स्थापनैव, भवतु वा वैज्ञानिको भावनिक्षेप एव, गङ्गापदेन तीरे गङ्गाभेदाभिव्यक्तिं विना गङ्गागतशैत्यपावनत्वादिधर्म्मयोगस्याभिव्यञ्जयितुमशक्यत्वात्, एतच्च विपञ्चितमलङ्कारचूडामणिवृत्तावस्माभिः, तत् किं शक्तिलक्षणान्यतरवृत्तेरपेक्षितशब्दसङ्केतविषयत्वमेव नामलक्षणं, स्थितमन्यार्थं इत्यत्रानेकार्थवाच्यव्यावृत्तये अशक्यार्थं इति करणाच्छक्यस्य पर्यायानभिधेयं चेत्यनेन लक्ष्यस्य च व्यावृत्तौ तात्पर्य्यात्, ओमिति चेत् ? तर्हि रूपसत्यादिविषये अतिव्याप्तिः, तस्य द्रव्यनिक्षेपविषयत्वेन[तत्रैव सा] इति चेत्? न, उक्तलक्षण एव भावनिक्षेपविषयाभेदव्यवहारौपयिकरूपराहित्यविशेषणदाने दोषाभावात्, निरूढलक्षणायाः स्वीकारे तु लक्षणाया निरूढत्वज्ञापकं वचनमेव निक्षेपः, तद्विषयविशेषस्त्वन्यव्यावृत्त्यादिना यथाव्यवहारं स्वीकार्य्य इति नातिप्रसङ्ग इति दिक्। "तच्चित्रं स्थापने"ति तस्य–घटस्य चित्रं–पत्रादिलिखित आकारः स्थापना, तल्लक्षणं चैवं स्मरंति "यत्तु तदर्थवियुक्तं तदभिप्रायेण यच्च तत्करणि लेप्यादिकर्म्म तत्स्थापनेति क्रियतेऽल्पकालं च ॥२॥" एतदर्थोऽयं यत् वस्तु तदर्थवियुक्तं–भावेंद्रा (द्य) र्थरहितं तदभिप्रायेण–तद्बुद्ध्या करणिः–आकृतिः, यच्चेन्द्राद्याकृति लेप्यादिकर्म्म क्रियते चशब्दादाकृतिशून्यं चाक्षनिक्षेपादि तत्स्थापनेति, तच्चाल्पकालमित्वरमित्यर्थः, चशब्दाद्यावद्द्रव्यभावि च। मृद्द्रव्यमिति घटकारणी, भूता मृदेव द्रव्यघट इत्यर्थः, तल्लक्षणमिदं "भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके। तद्द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं कथितं ॥ १ ॥ एतदर्थो यथा भूतस्य–अतीतस्य भाविनो वैष्यतो भावस्य कारणं–निमित्तं यल्लोके तद्द्रव्यमिति-

द्रवति गच्छति तांस्तान्पर्य्यायान् क्षरति वेति द्रव्यं, तत्त्वज्ञैः—सर्वज्ञैस्तीर्थकृद्भिरिति यावत्, सचेतनम्—अनुपयुक्तपुरुषाख्यं अचेतनं—ज्ञशरीरादि तथाभूतमन्यद्वा[न्यथा]कथितं—प्रतिपादितं, इहायं सम्प्रदायः—द्रव्यघटस्तावद्द्विधाऽऽगमतो नोआगमतश्च, आगमः पदार्थपरिज्ञानं नोआगमस्तद्विपर्ययः तत्रागमतो द्रव्यघटो घटशब्दाध्येताऽनुपयुक्तः "अनुपयोगो द्रव्यमि"ति वचनात्, अनुद्बुद्धपदवृत्तिग्रहाहितसंस्कारवानागमद्रव्यपदवाच्य इत्येतन्निष्कर्षः, नोआगमतश्च त्रिविधो द्रव्यघटो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्, तत्र घटपदार्थज्ञस्य शरीरमात्मरहितं सिद्धशिलातलगतमप्यतीतकालीनतद्भावानुवृत्त्या घृतघटन्यायेन ज्ञशरीरद्रव्यघटः, येन शरीरेण न तावदिदानी घटपदार्थं जानाति किन्त्वनेनैव कालान्तरेण ज्ञास्यति स भव्यशरीरद्रव्यघटः, तद्व्यतिरिक्तद्रव्यघटो मृद्रूपः कण्ठत एवोक्तः, अयं च द्रव्यपदार्थो द्विधा प्रयुज्यते, अप्राधान्येन योग्यतया च, अप्राधान्येन-यथाङ्गारमर्दको द्रव्याचार्य्य इति, योग्यतया यथा मृत्पिण्डो द्रव्यघटः सुश्रावकौ द्रव्यसाधुः साधुश्च द्रव्यदेव इत्यादि, योग्यता च यद्यप्यैकभविकबद्धायुष्काभिमुखनामगोत्रभेदेन त्रिविधैव अनुयोगद्वारसूत्रे नयभेदेन व्याख्याता, कायोत्सर्गनिर्युक्तौ द्रव्यकायनिरूपणप्रस्तावे "जंतु पुरक्कडभावं दवियं पच्छाकडं च भावाओ। तं होइ दव्वदवियं जह भविउंदव्वदेवाई ॥ १ ॥" इत्यत्रापि चातीतानागतानन्तभवेष्वपि द्रव्यपदव्यपदेशप्रसङ्गात् स्वयमुट्टङ्क्य पुरस्कृतपश्चात्कृतभवद्वय एवायुः कर्मसद्रव्यस्पर्शनोद्भावनेन निरस्तः, तथाहि दुहणोणन्तररहिया जइ एवं तो भवा अणन्तगुणा। एगस्स एगकाले भवा ण जुज्जन्तिऽणेगा (उ), व्याख्या, 'दुहओ'त्ति वर्त्तमानभवे स्थितस्योभयत एष्यकाले अतीतकाले "अणन्तररहिअ"त्ति अनन्तरौ एष्यातीतौ अनन्तरौ च तौ रहितौ च वर्तमानभवभावेनेति प्रकरणाद्गम्यते

अनन्तररहिता तावपि "जइ"त्ति यदि तस्योच्यते "तो"त्ति एवं सति भवास्तद्भवद्वयव्यतिरिक्ता वर्तमानभवभावेतररहिता
एष्या अतीताश्चानन्तगुणास्तस्य सिद्धाः ततस्तदपेक्षयापि द्रव्यत्वकल्पना स्यात्, इष्टापत्तिश्च कर्तुमशक्येत्याह एकस्य
एककाले–पुरुषादिकाले भवा न युज्यन्ते अनेके, ततो भावेन सह साक्षात्सम्बन्धाभावात् तेषु सर्वेषु द्रव्यत्वस्वीकारोऽनिष्ट
इत्यर्थः ॥१॥ इत्थं चोदकेनोक्ते गुरुराह "दुहओ णन्तरभवियं जह चिट्ठइ आउअं तु जं बद्धं । हुज्जियरेसु वि जइ तं दव-
भवा हुज्ज ता ते वि ॥२॥ व्याख्या, "दुहओ"त्ति वर्तमानभवे वर्तमानस्योभयत एष्येऽतीते चानन्तरभविकं–पुरस्कृतप-
श्चात्कृतभवसम्बधीत्युक्तंभवति "यथा तिष्ठति आयुष्कमेव" तु शब्दस्यावधारणार्थत्वान्न शेषं कर्म्म, यदीतरेष्वपि प्रभूते-
ष्वनागतेषु च भवेषु तदायुष्कर्म्मबन्धोदयद्वारकप्रत्यासत्तिकारि भवेत्तदा तेऽपि तस्मिन्भवे वर्तमानस्य द्रव्यभवा भवेयुः
तदायुष्कर्म्मसम्बन्धान्नचैतदस्ति तस्मादसच्चोदकमतमिति गाथार्थः ॥ २ ॥ अस्यैवार्थस्य प्रसाधकं लोकप्रतीतं निदर्शनमाह–
"संझासु दोसु सूरो अदिस्समाणो वि पप्पसमईअं । जह ओभासइ खित्तं तहेव एयंपि णायव्वं ॥ ३ ॥ सन्ध्या च सन्ध्या च
सन्ध्ये तयोः सन्ध्ययोः प्रत्यूषप्रदोषाप्रतिबद्धयोः सूर्य्य आदित्योऽदृश्यमानोऽपि प्राप्यं समतीतं च क्षेत्रं यथावभासयति–
यथा प्रत्यूषसन्ध्यायां पूर्वविदेहं भरतं च प्रदोषसन्ध्यायां तु भरतमपरविदेहं च तथैवैतदपि प्रक्रान्तं ज्ञातव्यं, इदमुक्तं
भवति–वर्तमानभवस्थितः पुरस्कृतभवं पश्चात्कृतभवं चायुष्कर्म्मसद्द्रव्यतया स्पृशति प्रकाशेनादित्यवदिति गाथार्थः, ॥ ३ ॥
तथापीयं भवद्वयनियतायुष्कर्म्मघटिता (तया) योग्यता (तया) तथानियमोक्तिर्नतु सर्वत्रानेन नियमेनैव व्यामोहो विधेयः,
तीर्थङ्करनामकर्मघटितया योग्यतया नानाभवव्यवधानेनापि मरीचेर्द्रव्यतीर्थकरत्वप्रतिपादनात्, "जे अ अईआ सिद्धा"

इत्यादिना सुदूरव्यवहितानामपि द्रव्यतीर्थकृतां वन्द्यत्वप्रतिपादनस्य नानाभवसम्बन्धघटितयोग्यतयैवोपपत्तेश्च, इत्थमेव पुष्पादिना भगवत्पूजादावुत्कर्षतोऽपार्द्धपुद्गलपरावर्तव्यवधानेन भावस्तवरूपफलोपधायकतया द्रव्यस्तवत्वम् । अपुनर्बन्धकाद्युचिताचारे चोत्कर्षतः पुद्गलपरावर्तव्यवधानेन भावाज्ञारूपफलोपधायकतया द्रव्याज्ञात्वमुपदेशपदादावुक्तं सङ्गच्छते तत्र समुचितशक्तिरूपाया योग्यतायास्तावत्कालनियताया एव सिद्धेः, न च फले पुद्गलपरावर्तव्यवधानमपुनर्बन्धकक्रियाया असिद्धं आशातनावहुलस्योत्कृष्टान्तरस्यापार्द्धपुद्गलपरावर्तमानस्यैव प्रसिद्धत्वादिति वाच्यं, बीजादीनां सान्तरेतरत्वभेदस्य तेषामुत्कृष्टान्तरस्यैकपुद्गलपरावर्तमानतायाश्च विंशिकायामाचार्य्यैः प्रतिपादनात्, तदुक्तं–"बीजाइआ य एए तहा तहा सन्तरेतरा णेया । तह भवत्तखित्ता एगन्तसहावबाहाए ॥ १ ॥ बीजस्स वि संपत्ती जायइ चरमम्मि चेव परिअट्टे । अच्चन्तसुन्दरा जं एसा वि तओ ण सेसेसु ॥ २ ॥ णय एअम्मि अणन्तो जुज्जइ णेयस्स णासकालु त्ति । ओसप्पिणी अणन्ता हुन्ति जओ एगपरिअट्टे" ॥ ३ ॥ तस्माद्योग्यता प्रतिकार्यं यथा सम्प्रदायं द्रव्यव्यवहारहेतुर्विशिष्याश्रयणीया, नतु द्रव्यमेव, (एवमत्रापि) द्रव्यकायादिव्यपदेशहेतुरायुःसम्बन्धघटितैव, तत्तत्पदसमभिव्याहारेण द्रव्यपदस्य नानार्थताद्योतनात्, अन्यथा द्रव्यस्तवादावगतेः, तदिदमुक्तं "इयरो पुण जोगात्ते चित्ते णयभेयओ मुणेअव्वो" इतरो द्वितीयो द्रव्यपदार्थः, नयभेदश्च प्रस्थकादिन्यायसिद्धः इत्यादिविपञ्चितमस्माभिर्द्धर्मपरीक्षायामिति विस्तरार्थिभिस्तत्त्वं तत एवावगन्तव्यं । रक्तादिको रक्तादिपर्य्यायपरिणामः, भावो भावघटः, तल्लक्षणं चेदं–"भावो विवक्षितक्रियानुभूतियुक्तो हि वै समाख्यातः । सर्वज्ञैरिन्द्रादिवदिहेन्दनादिक्रियानुभवात् " ॥ १ ॥ भवनं भावः स हि वक्तुरिष्ट-

क्रियानुभवलक्षणः सर्वज्ञैः समाख्यातः, इन्दनादिक्रियानुभवनयुक्तेन्द्रादिवदिति, अत्रागमतो भावघटो घटपरिज्ञानोपयुक्तः, नोआगमतो भावघटश्च रक्ततादिपरिणामसमूह इति विवेकः। अथ घटोपयोगमात्रात् कथं भावघट इति चेत्? न, घटज्ञानयोरतिरिक्तसम्बन्धाभावेन घटाकारतायास्तज्ज्ञानेऽवश्यंस्वीकर्तव्यत्वात् तादृशभावमपेक्ष्य घटोपयुक्तेभ्यश्च भावघटत्वोक्तौ बाधकाभावात्, अग्न्युपयुक्तस्य भावाग्नित्वे बाधकमुक्तमेव तदन्यत्रापि समानमिति चेत्? सत्यमुक्तं—परमयुक्तं, नह्यनलः सर्व एव दहनाद्यर्थक्रियाप्रसाधको भस्माच्छन्नाग्निना व्यभिचारात्, ज्ञानाद्वैतनयमतमेतदिति चेत्? किं ततः सर्वनयमये भगवत्प्रवचने [समा] यथाधिकारं यथेष्टतयाश्रयणे दोषाभावादिति किमतिप्रसक्तानुप्रसक्त्या ॥ ८६ ॥

तदेवं भिन्ने वस्तुनि निक्षेपचतुष्टयमवतारितं। अथैकस्मिन्नेव तदवतारयन्नाह—

**एकद्रव्येऽप्यात्मनामाकृतिकारणकार्य्यताः। पुरस्कृत्य महाभाष्ये दिष्टाः पक्षान्तरेण ते ॥ ८७ ॥**

"एकद्रव्येऽपी"ति एकस्मिन्नपि द्रव्ये, आत्मनो—विवक्षितपदार्थस्य, नाम—अभिधायकं पदं, आकृतिः—संस्थानं, कारणता—तत्पर्य्यायजननशक्तिः, कार्य्यता—तद्रूपेणाभिव्यक्तिः, एताः पुरस्कृत्य—मेलयित्वा, पक्षान्तरेण—भिन्नपक्षाभिप्रायेण, ते—नामादयश्चत्वारोऽपि निक्षेपा महाभाष्ये दिष्टाः—प्रतिपादिताः, तथा च तद्गाथा—"अहवा वत्थुभिहाणं नामं ठवणा य जो तयागारो। कारणयासे दवं कज्जावन्नं तयं भावे" ॥ १ ॥ इति अस्मिंश्च पक्षे "व्यक्त्याकृतिजातयः पदार्थः" इति गौतमीयं सूत्रं यथा त्रिषु पदार्थपर्याप्त्यभिप्रायेण व्याख्यायते तथा "नामस्थापनाद्रव्यभावतस्तन्न्यासः" इत्यस्मदीयं तत्त्वार्थसूत्रमपि चतुर्षु पर्याप्त्यभिप्रायेण व्याख्येयं, अधिकविषयपक्षपाती च व्यवहारः, न ह्याकृतिरिव नामापि स्वरसतः

पदान्न प्रतीयते, नवाकृतिवत्ताया इव नामवत्ताया अपि संशयः शाब्दबोधानन्तरमवतिष्ठत इत्यादिरन्यत्रविस्तरः॥ ८७ ॥ तदेवं भिन्नद्रव्ये एकद्रव्ये वा चत्वारोऽपि निक्षेपा द्रव्यार्थिके सिद्धा, एतेषां च सर्वव्यापकत्वं श्रूयते, तद्व्यभिचारशङ्कामुन्नीय प्रायिकव्याप्त्यभिप्रायेण व्यवस्थापयति—

**अप्रज्ञाप्याभिधाद्रव्यजीवद्रव्याद्ययोगतः । न चाव्यापित्वमेतेषां तत्तद्भेदनिवेशतः ॥ ८८ ॥**

**इतीयं प्रायिकी व्याप्तिरभियुक्तैर्निरूप्यते । यत्तत्पदाभ्यां व्याप्तिश्चानुयोगद्वारनिश्चिता ॥ ८९ ॥**

"अप्रज्ञाप्ये"ति "इतीयमि"ति एतेषां नामादीनां चतुर्णां निक्षेपाणामप्रज्ञाप्ये वस्तुनि अभिधाया–नाम्नोऽप्रयोगाज्जीवद्रव्ययोश्च जीवत्वेन द्रव्यत्वेन च भूतभविष्यत्पर्यायभावेन तत्कारणत्वाभावाद्द्रव्यनिक्षेपस्यायोगात्,न चाव्यापित्वमाशङ्कनीयं, कुतः ? तद्व्यभिचारस्थानभेदस्य निवेशात्, इति हेतोरियं यद्यद्वस्तु तत्तन्निक्षेपचतुष्टयवदित्याकाराव्याप्तिः प्रायिकी अभियुक्तैः–पण्डितैर्निरूप्यते, व्याप्यतावच्छेदकेऽप्रज्ञाप्यजीवद्रव्यादिभेदनिवेशात्,ननु यदि सामान्यतो व्याप्तेर्ग्राहकं प्रमाणं स्यात्तदा तत्रायं सङ्कोचः कर्तुं शोभते तदेव तु किमित्याशङ्कायामाह–व्याप्तिश्च यत्तत्पदाभ्यामनुयोगद्वारसूत्रादेव निश्चिता "जत्थ य जं जाणिज्जा निक्खेवं निक्खेवे णिरवसेसं। जत्थवि य न जाणिज्जा चउक्कयं णिक्खिवे तत्थ ॥१॥" इति तत्पाठात् यो धूमवान् सोऽग्निमानितीव व्याप्त्युपस्थितेरावश्यकत्वादिति भावः ॥ ८८ ॥ ८९ ॥ एतच्च प्रायिकव्याप्त्यभिधानं तत्त्वार्थटीकाकृन्मतेन, तथा च ते आहुः–"यद्येकस्मिन्न सम्भवति नैतावता भवत्यव्यापिते"ति एतदेव च सम्प्रदायशुद्धमिति । अत्र मतद्वयमुपन्यस्य दूषयति—

आदिष्टजीवद्रव्याभ्यां द्रव्यन्यासस्य सम्भवं । अप्रज्ञाप्ये जिनप्रज्ञानाम्नश्च ब्रुवते परे ॥ ९० ॥
तच्चिंत्यमुपयोगो यन्नाम द्रव्यार्थिकस्य न । नरादेर्द्रव्यजीवत्वे सिद्धे स्याद्भावजीवता ॥ ९१ ॥
आदिष्टद्रव्यहेतुत्वाद्रव्यद्रव्यप्रतिश्रुतौ । भावद्रव्यं न किञ्चित्स्याद्गुणेऽपि द्रव्यताऽर्पणात् ॥ ९२ ॥

"आदिष्टत्यादित्रयेण" परे आचार्य्या अप्रज्ञाप्ये वस्तुनि जिनप्रज्ञारूपनामनिक्षेपस्य सम्भवं ब्रुवते, यत्र न शृङ्ग-ग्राहिकया सङ्केतः कर्तु शक्यस्तत्र केवलिप्रज्ञैव नामतयैव तत्कार्य्यकरणात्, न च नाम शब्दरूपमेवेति, मौनिकृत-लिप्यादौ व्यभिचारात्, मनुष्यादि जीव एव भाविदेवादिजीवपर्य्यायहेतुत्वात् द्रव्यजीवो, मृदादिद्रव्यमेव आदिष्ट-द्रव्यत्वानां घटादिपर्य्यायाणां हेतुत्वाद्रव्यमिति वक्तुं शक्यत्वादिति भावः॥

तद् एतन्मतं चिन्त्यम्, यद्—यस्माद्रव्यार्थिकस्य नयस्य मते उपयोगो नाम न भवति,शाब्दबोधजनकाक्षरलिप्यादेरेव तेन नाम्नः स्वीकारादिति द्रव्यार्थिकविपयनिरूपणे केवलिनं ज्ञानरूपं नामातिरिक्तं वचादिष्टं,(अप्रज्ञाप्य वस्तुनि नाम न भवति) जीवहेतुतया नरादेर्द्रव्यजीवत्वे चाभ्युपगम्यमाने सिद्धे भावजीवत्वं स्यात्तत्रादिष्टे द्रव्यहेतुत्वाभावादिति संसारिजीवमात्रे भा-वजीवत्वाभिधायकसिद्धान्तव्याकोपः स्यात्॥ आदिष्टद्रव्यहेतुत्वाद्धेतोः द्रव्यद्रव्यस्य प्रतिश्रुतौ स्वीकारे च भावद्रव्यं किमपि न स्यात्, यदेव भावद्रव्यं स्वीक्रियतेऽन्त्यावयव्यादि, तत्रापि तद्गतगुणे द्रव्यतामर्पयित्वादिष्टद्रव्यहेतुतया द्रव्यद्रव्यव्यप-

देशस्य कर्तुं शक्यत्वात्। किञ्च स्वसमभिव्याहृतपदार्थतावच्छेदकावच्छिन्नकर्म्मतानिरूपितकारणताबोधन एव द्रव्यस्य साकाङ्क्षत्वान्मनुष्यो द्रव्यजीव इत्यादि दुर्वचं, अन्यथा मृत्पिण्डो द्रव्यघट इतिवत् द्रव्यपट इत्यस्याप्यापत्तेः, कार्य्यमात्रे कालोपाधिविधयापि तस्य पटहेतुत्वादिति विभावनीयं सुधीभिः ॥ ९० ॥ ९१ ॥ ९२ ॥

**अन्ये तु द्रव्यजीवो धीसन्न्यस्तगुणपर्य्ययः। तदसन्न धिया तेषां सन्न्यासः स्यात्सतां यतः ॥९३॥**

"अन्य" इति अन्ये त्वाचार्य्या धिया—बुद्ध्या सन्न्यस्ता गुणपर्याया यस्य स तथा, गुणपर्यायवियुक्तः प्रज्ञास्थापित इति यावत्, तादृशो जीवो द्रव्यजीव इति व्याचक्षते, तदसत्, यतः सतां तेषां—गुणपर्य्यायाणां धिया सन्न्यासो न स्यात्, नहि यादृच्छिकज्ञानायत्तार्थपरिणतिरस्ति। जीवशब्दार्थज्ञस्तत्रानुपयुक्तः, जीवशब्दार्थज्ञस्य शरीरं वा जीवरहितं द्रव्यजीव इति नाव्यापिता नामादीनामिति तु परिभाषाव्याख्याने शोभते, नत्वेकरूपे व्याप्तिग्रहमूलके व्यवहार इति भावनीयं सुधीभिः ॥ ९३ ॥ तदेवं प्रायिकव्याप्त्या नामादिचतुष्टयं सर्वत्रेच्छन्ति सर्वेऽपि द्रव्यार्थिकनया इति व्यवस्थापितं। अत्र यैः स्थापनानिक्षेपः सङ्ग्रहनये नेष्यते तन्मतमुपन्यस्य तत्र भाष्योक्तदूषणमेवानूद्य तत्रैव युक्त्यन्तरपरिस्कारं कर्तुकाम आह—

**सङ्ग्रहे स्थापना नेष्टा तस्या नाम्नैव सङ्ग्रहात्। किं नेन्द्रचित्रं नामेन्द्र इन्द्रनामकपिण्डवत् ॥ ९४ ॥**

"सङ्ग्रह" इति सङ्ग्रहे—सङ्ग्रहनये, स्थापना नेष्टा स्थापनानिक्षेपो नाभिमतः, तस्याः—स्थापनायाः, नाम्नैव—नामनि-

अनुयोगद्वारनिरूपितव्याप्तौ समतद्द्वयं निरूप्य तत्खण्डनम्

॥ ६९ ॥

क्षेपेणैव सङ्ग्रहात्, सङ्ग्रहप्रवणो ह्ययं व्यापके व्यापकं(व्याप्यं)सङ्गृह्णात्येव,पदप्रतिकृतिभ्यामनयोर्भेदः स्यात् अत इन्द्रचित्रं किं इन्द्रनामकपिण्डवन्नामेन्द्रो न भवति काक्वा भवत्येवेत्यर्थः, तथा च नामेन्द्रत्वं द्विविधं, इन्द्र इति पदत्वमेकं १ अपरञ्चेन्द्रपदसङ्केतविषयत्वं २, आद्यं नाम्नि, द्वितीयञ्च पदार्थे, तच्च नामस्थापनासाधारणमेवेति न दोष इति भावः॥१४॥ अथ नामभावनिक्षेपसाङ्कर्यपरिहारायेन्द्रपदसङ्केतविशेषविषयत्वमेव नामेंद्रत्वं निर्वक्तव्यं, तच्च सादृश्येतरसम्बन्धनिमित्तकेन्द्रपदलक्षणाविषयत्वं स्थापना इत्यावृत्यामेवेति तन्नाम्ना तत्सङ्ग्रहा इत्याशङ्कायामाह—

**नामातिरिक्तो नामेन्द्रो लक्ष्य इन्द्रपदस्य हि । तस्य मुख्यार्थसादृश्ये वैसादृश्ये च नाग्रहः ॥ ९५ ॥**

"नामे"ति इन्द्रपदस्य लक्ष्यो नामातिरिक्त एव हि नामेन्द्रपदार्थस्य घटकलक्षणायां सादृश्ये वैसादृश्ये वा निमित्ते नाग्रहः कर्तव्यो, गौण्यतिरिक्तलक्षणाया असङ्ग्रहापत्तेः, तथा च लाघवात् सादृश्येतरसम्बन्धनिमित्तकत्वमपहायेन्द्रपदलक्षणाविषयत्वमेव नामेन्द्रत्वं वाच्यं तच्च न स्थापनाव्यावृत्तमिति नाम्ना स्थापना सङ्ग्रहो युक्त एवेति भावः ॥ ९५ ॥

**इदं कैश्चिन्मतं तच्च भाष्ये दूषितमुच्चकैः । नाम्नैव द्रव्यनिक्षेपेऽप्येवं सङ्ग्रहसम्भवात् ॥ ९६ ॥**

"इदमि"ति इदं कैश्चिदाचार्यैर्मतम्—अङ्गीकृतं, तच्चोच्चकैर्महता प्रबन्धेन भाष्य एव दूषितं, एवमुपचारविषयत्व-

---

१ "स्थापनाव्यावृत्तमेवेति नाम्ना तदसङ्ग्रह इत्याशङ्कायामाह" इति शुद्धतया प्रतिभाति । २ यद्यपि सर्वादर्शेषु मूलस्थपाठो दृश्यते तथापि "एव नामेन्द्रः, हिः—एवार्थे, तस्य—नामेन्द्रपदार्थस्य, मुख्यार्थसादृश्ये—शक्यार्थघटकलक्षणायां सादृश्ये" इत्येवं शुद्धतया प्रतिभाति ।

स्यैव नामार्थत्वे, द्रव्यनिक्षेपेऽपि द्रव्यनिक्षेपविषयेऽपि, नाम्नैव—नामपदार्थतयैव सङ्ग्रहसम्भवात् ॥ ९६ ॥ भावप्रवृत्तिताप्रयोजकसम्बन्धभेदान्नामद्रव्ययोर्भेदो भविष्यतीत्याशङ्कायामाह—

**परिणामितया द्रव्यं वाचकत्वेन नाम च । भावस्थमिति भेदश्चेन्नामेन्द्रे दुर्वचं ह्यदः ॥ ९७ ॥**

"परिणामितये"ति परिणामितया द्रव्यं भावे सम्बद्धं, नाम च वाचकत्वेन वाच्यवाचकभावेन सम्बद्धमित्येवं नामद्रव्ययोर्भेदश्चेददो नियामकं नाम्नेन्द्रे गोपालदारके दुर्वचं तस्य भावावाचकत्वात् ॥ ९७ ॥

**परिणामित्वभिन्नश्चेन्नामनिक्षेपलक्षकः । सम्बन्ध इष्टः साम्यादिभिन्नः किन्न तथेष्यते ॥ ९८ ॥**

"परिणामित्वे"ति अथ द्रव्ये नाम्नो भिन्नत्वस्य सार्वजनीनत्वान्नामनिक्षेपलक्षकः—नामनिक्षेपपदार्थताघटकलक्षणाविशेषणीभूतः सम्बन्धः परिणामित्वभिन्न एवेष्टव्यः तदा स्थापनाया अपि नामभिन्नत्वस्य सार्वजनीनत्वात् साम्यादिभिन्नसम्बन्धोऽपि तथा नामनिक्षेपलक्षकत्वेन किं नेष्यते तुल्ययोगक्षेमत्वात्, तथा च गौरवस्य प्रामाणिकत्वात् परिणामित्वसादृश्यादीतरसम्बन्धनिमित्तकलक्षणाविषयत्वमेव[1] नामत्वमिति नाम्ना स्थापनासङ्ग्रहः सङ्ग्रहनये दुष्कर इति सिद्धं, नोचेत् भावातिरिक्तमप्राधान्ययोग्यतातात्पर्यमुद्रया सर्वं द्रव्यमेवेति यदृच्छया नामापि द्रव्यतयैव सङ्ग्राह्यमित्यपि वक्तुं शक्यतेति पर्य्यालोचनीयं । स्यादेतत्, षण्णां प्रदेशस्वीकर्तुर्नैगमात्पञ्चानां तत्स्वीकारेणेवात्रापि चतुर्निक्षेपस्वीकर्त्तु-

१ "तसङ्ग्रहादेतत्स्थलीयलक्षणाविषयत्वमेव नामत्वमिति" इत्यपि कुत्रचित् ।

स्ततस्तन्नयस्वीकारेणैव सङ्ग्रहस्य विशेषो युक्त इति मैवं, देश(प्रदेश) वत्स्थापनाया उपचरितविभागाभावेन तत्स्थलीयसङ्ग्रहादेतत्स्थलीयसङ्ग्रहस्य विशेषात्, पाश्चात्योपरितनयोर्विकासकसङ्कोचकविशेषणवत्त्व एव मध्यवर्तिनयस्य पाश्चात्यार्थसङ्कोचरूपसङ्ग्रहपरत्वनियमाच्चेति दिक् ॥ ९८ ॥ ननु सादृश्यसम्बन्धस्य स्थापनानिक्षेपनियामकत्वे असद्भावस्थापनोच्छेदप्रसङ्गः, अभिप्रायसम्बन्धस्यापि तन्नियामकत्वे च नाऽप्यपि तस्य सुवचत्वादतिप्रसङ्गस्तदवस्थ एवेत्याशङ्कायामाह—

अतिप्रसङ्गो नैवं चाभिप्रायाकारयोगतः । यत् श्रुतोक्तमनुल्लङ्घ्य स्थापनानाम चान्यतः ॥ ९९ ॥

"अतिप्रसङ्ग" इति एवं—उक्ताशङ्काप्रकारेण चातिप्रसङ्गो न भवति, यत् श्रुतोक्तम्—सिद्धान्तवचनमनुल्लङ्घ्याक्षादावेवाभिप्रायसम्बन्धं प्रतिमादावेव चाकारसम्बन्धं पुरस्कृत्य स्थापनाद्रियते, अन्यतः—अन्यस्थले च नामनिक्षेप इति नातिप्रसङ्गः, तथाच सूत्रबोधितबलवदनिष्टाननुबन्धीष्टसाधनताकतद्गतगुणस्मृतिजनकसंस्कारोद्बोधकाभिप्रायाकारान्यतरसम्बन्धवत्त्वं तत्स्थापनात्वमिति फलितं भवति ॥ ९८ ॥ उक्तविशेषप्रयोजनमेवोपदर्शयितुमाह—

अत एव न धीरर्हत्प्रतिमायामिवार्हतः । भावसाधोः स्थापनया द्रव्यलिङ्गिनि कीर्तिता ॥ १०० ॥

"अत एव" इत्यादि अत एवोक्तविशेषणनिवेशध्रौव्यादेव, अर्हत्प्रतिमायामर्हत इव, द्रव्यलिङ्गिनि—प्रकटप्रतिषेविणि पार्श्वस्थादौ, स्थापनया भावसाधोर्धी सिद्धान्ते न कीर्तिता ॥ १०० ॥ कुत इत्याह—

सा हि स्थाप्यस्मृतिद्वारा भावादरविधायिनी । न चोत्कटतरे दोषे स्थाप्यस्थापकभावना ॥ १०१ ॥

शुद्धताप्रतिसन्धानदशायां वन्धमाने साधौ कथं निर्जरोत्पत्तिः रूपेणैव हेतुत्वे मायाच्छादितदोषे आलयविहारादिना पृथगेव निर्जराहेतुत्वाददोषः, तथा सति सङ्गच्छते, न च तत्र निरवद्यकर्म्मयुक्ततया अगृहीतासंसर्गकगुणसङ्कल्पेन युक्तत्वात्प्रतिमावन्दनादुभयाभावा- तुल्यन्यायतया सावद्यकर्म्मयुक्तत्वेनागृहीतासंसर्गकगुणसङ्कल्पत्वेन बन्धहेतुताया एव वास्तवविषयताया एव पत्तेः, न च सत्त्वशुद्धिविधया कारणतायामयमेव प्रकारः, अवञ्चकयोगविधया कारणतायां तु “तहवि फलं अत्थि मणविसुद्धिए” इत्यनेन निवेशान्न दोष इति वाच्यं, सत्त्वशुद्धिविधयैव प्रतिमावन्दनात् निर्जरोत्पत्तेः (प्रतिष्ठिता) प्रतिष्ठितयोरवि- प्रतिपादनात्, किञ्च गुणदोषोभयवैकल्यमात्रेण प्रतिमायामर्हदध्यवसायस्य निर्जराङ्गत्वे विहिकारियाए य॥१॥ ठंडिल्ले शेपापत्तेः,न च—“सयकारियाइ एसा जायइ ठवणाइ वहुफला केई। गुरुकारियाइ अन्ने विसिट्ठ उवयारंगा इह सोवओग- वि य एसा मणठवणाए पसत्थिगा चेव । आयासगोमयाइहिं एत्थमुवल्लेवणाइ हिअं ॥ २ ॥ इति पूजाविधिविंशिकावचनपर्यायलोचनयेय साहारणाण इट्ठफला । किंच विसेसेण तओ सव्वे ते विभइअवन्ति ॥ ३॥” मानसप्रतिष्ठापुरस्कारेण प्रवृत्तानां पूजाविधिविकल्पानां वि- मभिप्रदेति वाच्यं, तत्र प्रतिष्ठितत्वव्याप्यधर्म्मपुरस्कारेणेव मानसाऽभिप्रायशोधिताविधिप्रतिष्ठितपूजाजन्यतावच्छेदक- धिप्रतिष्ठितपूजाजन्यतावच्छेदकजातिव्याप्यजात्यवच्छेदेन प्रतिष्ठासामान्यस्याकिञ्चित्करत्वे तात्पर्याभावात्,अन्यथा जात्यवच्छेदेन च फलभेदाद्धेतुभेदोपयुक्त इत्यभिप्रायेण प्रवृत्तावपि कश्चित् स्थापनानिक्षेपो निरुन्यता- प्रतिष्ठाविधिवैयर्थ्यप्रसङ्गात्, ततः प्रतिष्ठादिविधिजनितः प्रतिभागतोऽतिशयविशेषः पक्षानन्तरं परिस्कुर्वन्नाह— मित्याकाङ्क्षायां “सन्ता तित्थयरगुणा”. इत्यादिगाथायामेव व्याख्यानान्तरं सूचितं

**यद्वा प्रतिष्ठाविधिना स्वात्मन्येव परात्मनः । स्थापना स्यात्समापत्तिर्बिम्बे सा चोपचारतः ॥ १०२ ॥**

"यद्वे"ति यद्वा—पक्षान्तरे, प्रतिष्ठाविधिना प्रतिष्ठाकारयितुः स्वात्मन्येव परात्मनः—परमगुणवतस्त्रिभुवनभर्तुः, ध्यानतारतम्ये च तात्स्थ्यतदञ्जनत्वरूपा समापत्तिरेव स्थापना स्यात्, निश्चयतः सर्वक्रियाणां तत्फलानां चोद्देश्यसम्बन्धित्वेन व्यवह्रीयमाणानामपि स्वात्मसम्बन्धित्वस्यैव भाष्यादौ व्यवस्थापनात्, परात्मन इत्युपलक्षणं, स्वभावस्याहत्य हि प्रतिष्ठया कारयितरि स्वभाव एव स्थाप्यते, परम्परया तु तन्मूलपरमात्मानुध्यानविषयवचनाद्यप्रवर्तकत्वसम्बन्धस्मारितः तच्च—भवति च खलु प्रतिष्ठा निजभावस्यैव देवतोद्देशात् । स्वात्मन्येव परं यत्स्थापनमिह वचननीत्योच्चैः ॥ १ ॥ बीजमिदं परमं यत् परमाया एव समरसापत्तेः । स्थाप्येन तदपि मुख्या हन्तैषैवेति विज्ञेया ॥ २ ॥ इति । नन्वेवं निश्चयतः स्थापनाया आत्मगतायाः प्राप्तौ प्रतिमायां तद्व्यवहारः कथम्? अत आह—बिम्बे च 'सा' स्थापना, उपचारतः स्वात्मनि स्थापितस्य भावस्यालम्बनतया समापत्तिविषयीक्रियमाणस्य परमात्मनः साकारयोगमुद्रानुकारितया वा लक्षणयैवेत्यर्थः ॥१०२॥

नन्वेवं यजमानगतादृष्टमेव प्रतिष्ठाफलं भवद्भिरुपपादितम्, तावता वन्दकपूजकादीनां का सिद्धिः? सा हि तदा स्यात् यदि प्रतिष्ठाहितचाण्डालादिस्पर्शनाश्यपूजाफलप्रयोजकः कश्चिदतिशयोऽभ्युपगतः स्यात्, प्रतिष्ठितप्रतिमावन्दनपूजननत्यादिना फलविशेषहेतुत्वस्येत्थमेव वक्तुं शक्यत्वात्, न च यजमानगतादृष्टं तदाहितं तथा, चाण्डालादिस्पर्शेन व्यधिकरणेन तन्नाशायोगात्, यजमानस्य तददृष्टक्षये पूज्यत्वानापत्तेः । एतेन सम्बन्धविशेषेण यजमानगतादृष्टस्य प्रतिमागतत्वसमर्थनमपि प्रत्याख्यातम् । यत्तु प्रतिष्ठाविधेर्देवतासंविधानस्य स्वाभेदस्वीयत्वादिज्ञानतदाहितसंस्काररूपस्योत्पादात्फ-

सा हि–स्थापनाधीर्हि, स्थाप्यस्मृतिद्वारा–एकसम्बन्धिज्ञानेऽपरसम्बन्धिस्मृतिरिति नियमविधया, स्थाप्यस्मृतिव्यापारेण भावादरस्य–स्थाप्यगतगुणप्रणिधानोद्रेकस्य तज्जनितनिर्जरातिशयस्य वा विधायिनी । न च स्थापनाविषये उत्कटतरे दोषे प्रतिसन्धीयमाना [ इति शेषः, ] स्थाप्यस्थापकभावना फलवतीति शेषः, तथा च द्रव्यलिङ्गिदर्शनादपि न भावसाधुगुणानुस्मृतिरेव, तन्नियामकप्रायिकसादृश्यरजोहरणगोच्छकपतद्ग्रहादिरूपस्य तस्याबाधितत्वात्, किन्तूत्कटदोषवत्त्वेन प्रतिसन्धीयमानस्य सादृश्याद्गुणवदनुस्मृतिः सूत्रबोधितबलवदनिष्टानुबन्धिकैव इति न यथोक्तविशेषणविशिष्टं स्थापनालक्षणं तत्रेत्युक्तं भवति, अत एव वन्दनकनिर्युक्तौ–"तित्थयरगुणा पडिमासु णत्थि णिस्संसयं वियाणंतो । तित्थयर त्ति णमन्तो सो पावइ णिज्जरं विउलं ॥१॥ लिंगं जिणपण्णत्तं एव णमंतस्स णिज्जरा विउला । जइवि गुणविप्पहीणं वंदइ अज्झप्पसोहीए ॥ २ ॥" इति गाथाभ्यां सादृश्यसम्बन्धमात्रेणार्हत्प्रतिमाया अर्हतः(इव)द्रव्यलिङ्गिनो भावसाधोस्तटस्थेन स्मृतेरुत्थापकतयाध्यात्मशुद्धिप्रभवनिर्जराङ्गत्वेन वन्दनीयत्वं यदाक्षिप्तं पूर्वपक्षकृता, तत्राचार्य्यैरेकत्रोत्कटदोषवत्त्वेनोपस्थिते समानसंवित्संवेद्यतालभ्यगुणवत्सादृश्यधीस्तद्गतदोषानुमितिरूपतया गुणवदपकर्षव्यञ्जकत्वेन तन्निदानरूपत्वेन बलवदनिष्टानुबन्धावहा, अन्यत्र चोक्तकारणाभावान्न तथात्वमिति वैषम्यमुद्भावयित्वा समाधानं कृतं । "सन्ता तित्थयरगुणा तित्थयरे तेसिमं तु अज्झप्पं ण य सावज्जा किरिया इयरेसु धुवा समणुन्ना ॥१॥" इति गाथया अस्यार्थः सन्तो–विद्यमानाः शोभना वा, तीर्थकरत्वेन प्रतीयमानस्य गुणाः तीर्थकरे–अर्हतीति, इयं च प्रतिमा तेषां गुणानामिदमध्यात्म्यं अनमस्कुर्वतामिदमध्यात्म्यं समापत्त्यादिफलकानुभूयमानतीर्थकरगुणस्मृत्यालम्बनं, यद्वा तेषां

ध्यारोपविषयः तटस्थेन स्मृतौ योग(ग्य)जीवानुसमापत्त्यसिद्धेः। न च तासु प्रतिमासु सावद्या सपापा क्रिया, इतरेषु पार्श्वस्थादिषु ध्रुवा सेति योज्यते, ततः समनुज्ञा सावद्यक्रियायुक्तपार्श्वस्थादिप्रणमनात् ध्रुवेति योगः, एवं च सति प्रतिमायामुभयक्रियाभावप्रसञ्जितोभयफलाभावः तदालम्बनकस्थाप्यगुणसङ्कल्परूपमनःशुद्धेर्वलवत्तयैव निराक्रियमाणः पार्श्वस्थादिवन्दनेऽपि मनःशुद्धेर्वलवत्तयैव दोषाभावं गुणोदयं च साधयितुं कथं न प्रागल्भत इत्याशङ्काशेष उभयविकले एवाकारमात्रतुल्ये कतिपयगुणान्विते वा उत्कृष्टगुणाध्यारोपशुभसङ्कल्परूपतामास्कन्दन्निर्जराहेतुः, अन्यत्र त्वसावशुभसङ्कल्परूपत्वेन निरवद्यकर्म्माभाववद्विशेष्यकत्वस्य गौरवेणातन्त्रत्वात्, सावद्यकर्म्मवद्विशेष्यकतयैव विपर्यासलक्षणसमन्वयेन वा अनन्तक्लेशावह इत्यभिप्रायेणाचार्य्यैस्तत्रैव निराकृतः, तथाहि—"जह सावज्जा किरिया णत्थि य पडिमासु एवमियराविं। तयभावे णत्थि फलं अह होइ अहेउगं होइ"॥१॥ कामं उभयाभावो तहवि फलं अत्थि मणविसुद्धीए। तीइ पुण मणविसुद्धीइ कारणं होन्ति पडिमा उ ॥२॥ "जइवि य पडिमा उ जहा मुणिगुणसंकप्पकारणं लिंगं। उभयमवि अत्थि लिंगे ण य पडिमासूभयं अत्थि ॥ ३ ॥ णियमा जिणेसु उ गुणा पडिमाओदिस्स जे मणे कुणइ। अगुणे उ वियाणंतो कं नमइ मणे गुणं काउं ॥ ५ ॥ जह वेडंवगलिंगं जाणंतस्स णमओ हवइ दोसो। णिद्धंसमिय णाऊण वंदमाणे धुवं दोसो ॥ ५ ॥" इति ॥१०१॥ नन्वेवं स्थापनास्थले सावद्यकर्म्माभाववद्विशेष्यगुणसङ्कल्पत्वेन भावस्य निर्जराहेतुत्वमित्यागतं तच्चायुक्तं, लाघवेन निरवद्यकर्म्मवद्विशेष्यकत्वेनैव तद्धेतुत्वौचित्यात्लक्षणगौरवापेक्षया कार्य्यकारणभावगौरवस्य च महादोषत्वात्, किञ्च स्थापनास्थलीयभावे जात्युपाध्यन्यतरकृतातिरिक्तविशेषाभावे यथोक्त-

रूपेणैव हेतुत्वे मायाच्छादितदोषे आलयविहारादिना शुद्धताप्रतिसन्धानदशायां वन्द्यमाने साधौ कथं निर्जरोत्पत्तिः सङ्गच्छते, न च तत्र निरवद्यकर्म्मयुक्ततया अगृहीतासंसर्गकगुणसङ्कल्पेन पृथगेव निर्जराहेतुत्वाददोषः, तथा सति तुल्यन्यायतया सावद्यकर्म्मयुक्तत्वेनागृहीतासंसर्गकगुणसङ्कल्पत्वेन बन्धहेतुताया एव युक्तत्वात्प्रतिमावन्दनादुभयाभावापत्तेः, न च सत्त्वशुद्धिविधया कारणतायामयमेव प्रकारः, अवञ्चकयोगविधया कारणतायां तु वास्तवविषयताया एव निवेशान्न दोष इति वाच्यं, सत्त्वशुद्धिविधयैव प्रतिमावन्दनात् निर्जरोत्पत्तेः "तहवि फलं अत्थि मणविसुद्धिए" इत्यनेन प्रतिपादनात्, किञ्च गुणदोषोभयवैकल्यमात्रेण प्रतिमायामर्हदध्यवसायस्य निर्जराङ्गत्वे (प्रतिष्ठिता) प्रतिष्ठितयोरविशेषापत्तेः,न च—"सयकारियाइ एसा जायइ ठवणाइ बहुफला केई। गुरुकारियाइ अन्ने विसिट्ठ विहिकारियाए य॥१॥ ठंडिल्लेवि य एसा मणठवणाए पसत्थिगा चेव । आयासगोमयाइहिं एत्थमुवल्लेवणाइ हिअं ॥ २ ॥ उवयारंगा इह सोवओगसाहारणाण इट्ठफला । किंच विसेसेण तओ सवे ते विभइअवन्ति ॥ ३ ॥"-इति पूजाविधिविंशिकावचनपर्य्यायलोचनयेयमभिष्टप्रदेति वाच्यं, तत्र प्रतिष्ठितत्वव्याप्यधर्म्मपुरस्कारेणेव मानसप्रतिष्ठापुरस्कारेण प्रवृत्तानां पूजाविधिविकल्पानां विधिप्रतिष्ठितपूजाजन्यतावच्छेदकजातिव्याप्यजात्यवच्छेदेन मानसाऽभिप्रायशोधिताविधिप्रतिष्ठितपूजाजन्यतावच्छेदकजात्यवच्छेदेन च फलभेदाद्धेतुभेदोपयुक्त इत्यभिप्रायेण प्रवृत्तावपि प्रतिष्ठासामान्यस्याकिञ्चित्करत्वे तात्पर्याभावात्,अन्यथा प्रतिष्ठाविधिवैयर्थ्यप्रसङ्गात्, ततः प्रतिष्ठादिविधिजनितः प्रतिभागतोऽतिशयविशेषः कश्चित् स्थापनानिक्षेपो निरुन्यतामित्याकाङ्क्षायां "सन्ता तित्थयरगुणा" इत्यादिगाथायामेव व्याख्यानान्तरं सूचितं पक्षानन्तरं परिस्कुर्वन्नाह—

यद्वा प्रतिष्ठाविधिना स्वात्मन्येव परात्मनः । स्थापना स्यात्समापत्तिर्बिम्बे सा चोपचारतः ॥ १०२ ॥

“यद्वे”ति यद्वा—पक्षान्तरे, प्रतिष्ठाविधिना प्रतिष्ठाकारयितुः स्वात्मन्येव परात्मनः—परमगुणवतस्त्रिभुवनभर्तुः, ध्यानतारतम्ये च तात्स्थ्यतदञ्जनत्वरूपा समापत्तिरेव स्थापना स्यात्, निश्चयतः सर्वक्रियाणां तत्फलानां चोद्देश्यसम्बन्धित्वेन व्यवह्रीयमाणानामपि स्वात्मसम्बन्धित्वस्यैव भाष्यादौ व्यवस्थापनात्, परात्मन इत्युपलक्षणं, स्वभावस्याहत्य हि प्रतिष्ठया कारयितरि स्वभाव एव स्थाप्यते, परम्परया तु तन्मूलपरमात्मानुध्यानविषयवचनाद्यप्रवर्तकत्वसम्बन्धस्मारितः तच्च—भवति च खलु प्रतिष्ठा निजभावस्यैव देवतोद्देशात् । स्वात्मन्येव परं यत्स्थापनमिह वचननीत्योच्चैः ॥ १ ॥ बीजमिदं परमं यत् परमाया एव समरसापत्तेः । स्थाप्येन तदपि मुख्या हन्तैषैवेति विज्ञेया ॥ २ ॥ इति । नन्वेवं निश्चयतः स्थापनाया आत्मगतायाः प्राप्तौ प्रतिमायां तद्व्यवहारः कथम्? अत आह—बिम्बे च ‘सा’ स्थापना, उपचारतः स्वात्मनि स्थापितस्य भावस्यालम्बनतया समापत्तिविषयीक्रियमाणस्य परमात्मनः साकारयोगमुद्रानुकारितया वा लक्षणयैवेत्यर्थः ॥१०२॥

नन्वेवं यजमानगतादृष्टमेव प्रतिष्ठाफलं भवद्भिरुपपादितम्, तावता वन्दकपूजकादीनां का सिद्धिः? सा हि तदा स्यात् यदि प्रतिष्ठाहितचाण्डालादिस्पर्शनाश्यपूजाफलप्रयोजकः कश्चिदतिशयोऽभ्युपगतः स्यात्, प्रतिष्ठितप्रतिमावन्दनपूजनत्यादिना फलविशेषहेतुत्वस्येत्थमेव वक्तुं शक्यत्वात्, न च यजमानगतादृष्टं तदाहितं तथा, चाण्डालादिस्पर्शेन व्यधिकरणेन तन्नाशायोगात्, यजमानस्य तददृष्टक्षये पूज्यत्वानापत्तेः । एतेन सम्बन्धविशेषेण यजमानगतादृष्टस्य प्रतिमागतत्वसमर्थनमपि प्रत्याख्यातम् । यत्तु प्रतिष्ठाविधेर्देवतासंविधानस्य स्वाभेदस्वीयत्वादिज्ञानतदाहितसंस्काररूपस्योत्पादात्फ-

लोत्पत्तिः, चाण्डालादिस्पर्शे च तदभावात्फलाभाव इति कस्य चिन्मतम्, तत्तु मुक्तिप्रतिष्ठितदेवताया अभिमानाभावात्प्रतिष्ठया तदुपकारस्याशक्यक्रियात्वाच्चाचार्यैरेव दूषितम्, तदुक्तम्—"मुक्त्यादौ तत्त्वेन प्रतिष्ठिताया न देवतायास्तु । स्थाप्ये न च मुख्येयं, तदधिष्ठानाद्यभावेन ॥ १ ॥ इज्यादेर्न च तस्या उपकारः कश्चिदत्र मुख्य इति । तदतत्त्वकल्पनैषा वालक्रीडा समा भवति ॥ २ ॥" इति । यदपि प्रतिष्ठितं पूजयेदिति विधिः प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शाभावविशिष्टप्रतिष्ठाध्वंसस्तद्विशिष्टप्रतिमापूजनं वा फलप्रदम्, क्तप्रत्ययादतीतत्वलाभादिति गङ्गेशोपाध्यायैरुक्तं तदपि तुच्छं, प्रतिष्ठारूपायां पूजायामेवागतेस्तत्र ध्वंसस्यैव फलजनकव्यापारस्याश्रयणे वादृष्टमात्रस्यैव दत्तजलाञ्जलीत्वप्रसङ्गात्, कथञ्चैवं प्रतिष्ठितेऽप्यप्रतिष्ठितत्वज्ञाने न पूजाफलम् ? प्रतिष्ठाध्वंसवत्त्वेन प्रमीयमाणत्वस्य पूजाफलजनकतावच्छेदककोटौ निवेशेन (निवेशापेक्षया) प्रतिष्ठावत्त्वेन प्रमीयमाणत्वस्यैव निवेशौचित्यमिति न किञ्चिदेतत्, तस्माद्वन्दनपूजनादिफलप्रयोजकत्वं कथं प्रतिष्ठाया इति जिज्ञासायामाह—

**प्रतिष्ठितप्रत्यभिज्ञासमापन्नपरात्मनः । आहार्यारोपतः सा च द्रष्टॄणामपि धर्मभूः ॥ १०३ ॥**

"प्रतिष्ठिते"ति "सा" स्थापना प्रतिष्ठितप्रत्यभिज्ञया समापन्नो यः परात्मा भगवान् तस्याहार्य्यारोपतः द्रष्टॄणामुपलक्षणाद्वन्दकानां पूजकानां च "धर्म्मभूः" धर्म्मकारणं भवति, अयं भावः—प्रतिमायां भगवदभेदारोपं विना न तावद्वन्दनपूजनादिफलं हेतुसहस्रेणापि सम्पद्यते, स च काष्ठपाषाणत्वादिना भेदप्रत्यक्षे सति स्वरसतो नोदयतीत्याहार्य्य एव सम्पादनीयः, आहार्य्यत्वं चेच्छाजन्यत्वं, इच्छा चेष्टसाधनताज्ञानसाध्येतीष्टसाधनताज्ञानसम्पादनाय प्रतिष्ठितां प्रतिमां

भगवदभेदेनाध्यारोपयेदिति विधिः कल्पनीयः । तथाचाहार्य्यभगवदध्यारोपविषयप्रतिमापूजनत्वादिना फलविशेषहेतुत्वे आहार्य्यत्वप्रयोजकेच्छाजनकज्ञानजनकविशेष्यतावच्छेदककुक्षिप्रविष्टत्वेन प्रतिष्ठाया अतिपरम्परया प्रयोजकत्वमित्युक्तं भवति, प्रतिष्ठितं पूजयेदित्यत्रापि क्तप्रत्ययस्य खण्डशः शक्त्या लक्षणादिना वा प्रतिष्ठाप्रयुक्ताहार्य्यारोपविषयपूजनत्वादिनैव फलहेतुता, क्तप्रत्ययस्य चौत्सर्गिकेन कृत्प्रत्ययेनैवार्थवत्तेति चिन्तामणिकारादप्यतिसूक्ष्ममतिनिपुणं च वयमीक्षामहे ॥ १०३ ॥ उक्तमेव वक्ष्यमाणफलान्वयेनाह—

तत्कारणेच्छाजनकज्ञानगोचरबोधकाः । विधयोऽप्युपयुज्यन्ते तेनेदं दुर्मतं हतम् ॥ १०४ ॥

"तत्कारणे"ति तस्याहार्य्यारोपस्य कारणं या इच्छा, तज्जनकं—यत्प्रतिष्ठितां प्रतिमां भगवदभेदेनाध्यारोपयेदिति विधिजनितं ज्ञानं तद्गोचरीभूतप्रतिष्ठाया बोधका-इष्टसाधनत्वबोधनादिद्वारा तदुत्पत्तिहेतव इति यावत्, विधयोऽपि-विधिवाक्यान्यपि, उपयुज्यन्ते—फलवन्तो भवन्ति, तैः प्रतिष्ठोत्पादने प्रतिष्ठितप्रतिमायामारोपविधिना भगवदभेदाध्यारोपोपपत्तौ पूजाफलप्रयोजकत्वसिद्धेः, तेनेदं—वक्ष्यमाणं दुर्मतमाध्यात्मिकाभासानां हतं—निराकृतम् ॥ १०४ ॥ किं तद् ? इत्याह—

प्रतिष्ठाद्यनपेक्षायां शाश्वतप्रतिमार्चने । अशाश्वतार्चापूजायां को विधिः ? किं निषेधनम् ? ॥१०५॥

"प्रतिष्ठे"ति शाश्वतप्रतिमार्चने प्रतिष्ठाया आदाविदं प्रथमतो ऽनपेक्षायां तत्रैव तस्याः फले व्यभिचारात्, अशा-

---

१ 'प्रत्यार्थेनाप्रत्ययत्वेनैवार्थवत्ता' इति मूलप्रतिषु.

श्वतार्चानां—कृतिमप्रतिमानां पूजायां प्रतिष्ठितां प्रतिमां पूजयेदिति विधिः कः ? अप्रतिष्ठितं न पूजयेदिति निषेधनं च किं ? प्रतिष्ठातदभावयोरिष्टानिष्टसाधनतया व्यभिचारात्, अभावेन तत्र विधिनिषेधार्थान्वयस्यायोग्यत्वादिति भावः ॥ १०५ ॥ कथमेतन्निरस्तम् ? इत्याह—

**पूजादिविधयो ज्ञानविध्यङ्गित्वं यदाश्रिताः । शाश्वताशाश्वतार्चासु विभेदेन व्यवस्थिताः ॥ १०६ ॥**

"पूजादीति" पूजादिविधयः—प्रतिष्ठितां प्रतिमां पूजयेदित्यादिवाक्यलक्षणाः, ज्ञानविधेः—प्रतिष्ठितां प्रतिमां भगवदभिन्नत्वेनाध्यारोपयेदित्यागमवाक्यात्मकस्याङ्गित्वं—प्रधानत्वम्, आश्रिताः शाश्वताशाश्वतार्चासु विभेदेन—भिन्नरूपेण व्यवस्थिताः । तथा च प्रतिष्ठाया न पूजासहकारित्वम्, किन्तु स्वकर्तव्यताबोधकविध्यङ्गता । यत्र विधिविषयनिर्वाहकत्वेन प्रयोजकत्वं तच्चाशाश्वतप्रतिमास्थले, अन्यत्र त्वनादिप्रतिष्ठितत्वप्रत्यभिज्ञाया एव तथात्वम्, तादृशशिष्टाचारेण तथैव विधिबोधनादिति विकल्पेनानयोः पूजाफलप्रयोजक (का) व्याहतेर्न कोऽपि दोष इति । अत एव निश्रितानिश्रितादिभेदेन स्वल्पबहुभक्तिविधानादेर्ज्ञानविशेषाक्षेपकत्वेन व्यवस्थितविकल्पोत्पादकत्वं सङ्गच्छते । अत एव चाविधिप्रतिष्ठितेऽप्यविच्छेदादिकारणालम्बनोपबृंहितवैज्ञानिकविधिना विधिप्रतिष्ठिततुल्यतामामनन्ति सम्प्रदायवृद्धाः । भावशोधितशुद्धनिमित्तनैमित्तकैकान्तशुद्ध्यभावेऽपीदानींतनयतिधर्म्मपौषधादिक्रियावत्, तत्र भावशोधनमात्रेण मध्यमशुद्ध्यप्रच्यवात् तस्या अपिच शुभानुबन्धसारत्वादित्यादिकमुपपादितं प्रतिमाशतकादौ । तस्मात्स्थापना तादृस्थ्येन भगवद्गुणस्मारकतया तदाहार्य्यारोपप्रयोजकतया सङ्ग्रहनयेनाप्यवश्यं स्वीकर्तव्येति व्यवस्थापितम् ॥१०६॥ एतेन तदनभ्युपगन्ता व्यवहारोऽपि निरस्त इत्याह—

प्रतिष्ठानिष्ठवन्दनपूजनादिफलप्रयोजकत्वम्

**एतेन व्यवहारेऽपि स्थापनानाग्रहो हतः । तत्रार्द्धजरतीयं किं नाम्नापि व्यवहर्त्तरि ॥ १०७ ॥**

"एतेने"ति एतेन—अनुपदोक्तयुक्तिकदम्बकेन सङ्ग्रहे स्थापनाव्यवस्थापनेन व्यवहारेऽपि स्थापनाया अनाग्रहः—अस्वीकारो हतः—निरस्तः केषाञ्चिदाचार्य्याणाम्, यतस्तत्र—व्यवहारे, नाम्नापि—नामनिक्षेपेणापि व्यवहर्त्तरि—व्यवहारमुपगच्छति, किमिदमर्द्धजरतीयं यदुत स्थापनाया न व्यवहार इति, नहीन्द्रप्रतिमायां नेन्द्रव्यवहारो भवति, न वा भवन्नपि भ्रान्त एव, न वा नामादिप्रतिपक्षव्यवहारसाङ्कर्यमित्येकमाद्रियमाणस्यापरं च परित्यजतः केवलमहोपुरिषिकामात्रमेवेति ॥१०७॥ ऋजुसूत्रेऽपि द्रव्यनिक्षेपं ये न स्वीकुर्वते तन्मतं निरूपयन्नाह—

**ऋजुसूत्रेऽपि ये द्रव्यनिक्षेपं प्रवदन्ति न । व्याख्येया तैः कथं तत्र द्रव्यावश्यकसूत्रगीः ॥ १०८ ॥**

"ऋजुसूत्रेऽपी"ति स्पष्टम्, व्याख्याप्रकारश्च यद्यप्यत्र नव्यनये प्रागभिहित एव, तथापि कथमित्यनेन सम्प्रदायविरोधाद्बिभ्यतां साम्प्रदायिकानां तथा नास्थेति व्यज्यते ॥ १०८ ॥ अत एवोक्तां निक्षेपनययोजनां सम्प्रदायशुद्धिमनुरुध्य निगमयन्नाह—

**तस्माद्यथोक्तनिक्षेपविभागो भाष्यसम्मतः । इतीयं मुहुरालोच्या निक्षेपनययोजना ॥ १०९ ॥**

"तस्मादिति" स्पष्टम् ॥ १०९ ॥ उक्ता निक्षेपनययोजना । अथ दर्शननययोजनामभिधित्सुराह—

**जातं द्रव्यार्थिकाच्छुद्धाद्दर्शनं ब्रह्मवादिनां । तत्रैके शब्दसन्मात्रं चित्सन्मात्रं परे जगुः ॥ ११० ॥**

"ज्ञात"मित्यादिना शुद्धाद्द्रव्यास्तिकाद् ब्रह्मवादिनां दर्शनं जातम्, तदाह वादी–"दव्वठियणयपयडीसुद्धा संगहपरूवणा-
विसउ"त्ति तत्रैके ब्रह्मवादिनः शब्दसन्मात्रमिच्छन्ति । अन्ये च चित्सन्मात्रम् । तत्राद्यमतावलम्बी शब्दस्वभावं ब्रह्म
सर्वेषां शब्दानां सर्वेषां चार्थानां प्रकृतिरित्यभ्युपैति, तदाह तदभियुक्तो भर्तृहरिः–"अनादिनिधनं ब्रह्म शब्दतत्त्वं यद-
क्षरम् । विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥१॥" इति अस्यार्थः–'आदिः–उत्पादः, 'निधनं' विनाशः, तदभावादनादि-
निधनं ब्रह्म, 'शब्दतत्त्वं' शब्दात्मकम्, वैखर्य्यात्मकशब्देनैव सर्वोल्लेखान्मध्यमाख्यशब्दसंसृष्टसविकल्पकज्ञानेनैव सर्वार्थ-
ग्रहणात्पश्यन्त्याख्यशुद्धशब्दात्मकज्ञानेनैव चाखण्डैकस्वरूपनिश्चयात्सर्वत्रानुस्यूतत्वात्सर्वोपादानत्वाच्च शब्दतत्त्वमखण्डं
ब्रह्मेत्यर्थः । एतदेवाह–'यदक्षरं' अकारादि, एतेनाभिधानरूपो विवर्तो दर्शितः । तथा यत् 'अर्थभावेन' तद् विवर्त्तते, एतेना-
भिधेयरूपो विवर्त्तो दर्शितः । तथा यतो जगतः 'प्रक्रिया' प्रतिनियता व्यवस्था, भेदानां सङ्कीर्तनमेतदिति । अयं च वर्णक्रम-
रूपो वेदस्तदधिगमोपायः, प्रतिच्छन्दकन्यायेन तस्यावस्थितत्वात्, तच्च परमब्रह्माभ्युदयनिःश्रेयसफलधर्म्मानुगृहीतान्त-
करणैरवगम्यते, अन्यैस्तु प्रयोगादवगम्यते, शब्द एव जगतस्तत्त्वम्, तद्बाधेऽप्यबाध्यमानत्वात्, अहिरज्जुवत् । ग्रामारामा-
दयः शब्दात्मकाः, तदाकारानुस्यूतत्वात्, सुवर्णात्मककुण्डलादिवदित्यादितः शब्दब्रह्मसाम्राज्यसिद्धेः । न च प्रमाणाधीना
प्रमेयव्यवस्था प्रमाणं च चिदात्मकमेवानुभूयत इति तत्र शब्दरूपत्वासिद्धिः, निराकारस्य ज्ञानस्यार्थाग्राहकत्वेन व्यव-
हारेऽनाश्रयणीयत्वात्, साकारस्य च तस्य वाग्रूपतां विना असम्भवात्, तदुक्तम्–"वाग्रूपता चेद् व्युत्क्रामेदवबोधस्य
शाश्वती । न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ १ ॥" इति । अत एव शब्दार्थसम्बन्धो वैयाकर्णैरभेदेनैव प्रति-

पादितः, युक्तश्चैतत्कथमन्यथा अदृष्टदशरथादीनामिदानींतनानां दशरथादिपदाच्छाब्दबोधः ? शुद्धदशरथत्वादिनोपस्थितेस्तत्रासम्भावनीयत्वात्तथापूर्वकमनुभवाभावात्, प्रमेयत्वादिना दशरथत्वादिप्रकारकोपस्थितौ च ततः प्रमेयवानित्याकारकबोधस्यैव सम्भवात्, न च प्रमेयवानित्याकारकसंस्कारात्प्रमेयत्वांशे उद्बोधकरहिता(तत्वा)च्छुद्धदशरथत्वादिप्रकारकस्मरणोपपत्तिः तत्प्रकारकस्मृतौ तत्प्रकारकानुभवत्वेनैव हेतुत्वादिति वाच्यम्, अन्वयव्यतिरेकाभ्यां शुद्धतत्प्रकारकस्मृतिं प्रति शुद्धतत्कारकानुभवत्वेनैव हेतुत्वसिद्धेः, न च प्रमेयाभाववदित्यादिज्ञानात्संसर्गविधया शुद्धदशरथत्वादिस्वरूपप्रतियोगित्वलक्षणसम्बन्धविषयकात् ज्ञानलक्षणप्रत्यासत्तेः शुद्धदशरथत्वादिप्रकारको मानसानुभवः सुलभः, सर्वज्ञापत्तिभिया सांसर्गिकज्ञानस्यानुपनायकत्वस्वीकारात्। तस्मादत्र दशरथपदवाच्यत्ववति दशरथपदवृत्तिप्रकारकज्ञानाद् यथा दशरथपदवाच्यत्वेन वाच्यतासम्बन्धेन दशरथपदत्वेन वा शाब्दबोधः स्वीकर्तव्यः, तथा तुल्यन्यायात्सर्वत्रापीति शब्दानुभवोऽप्यर्थस्य शब्दात्मकत्व एव साक्षीति । न चानवगतचित्तोऽपि रूपं चक्षुषा वीक्षमाणोऽभिलापासंसृष्टमेव विषयीकरोतीति नीलादेरशब्दात्मकत्वसिद्धिः, शब्दासंसृष्टार्थानुभवस्य ज्ञानवादिना ज्ञानाभावकाल इव शब्दवादिना शब्दाभावकाले बाह्यार्थस्यैवानभ्युपगमेन शब्दातिरिक्तग्राह्यासिद्धेर्बाह्यत्वनियतदेशवृत्तित्वादि च घटादावविद्यावशादेव भासत इति न तत्तदाकारैः शब्दब्रह्मभेदसिद्धिः, तदुक्तम्—"यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः । संकीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥ १ ॥ तथेदममलं ब्रह्म निर्विकल्पमविद्यया । कलुषत्वमिवापन्नं भेदरूपं विव-

र्तते ॥ २ ॥" इति । यदि वा ग्रामारामादिप्रपञ्चो व्यवहारसत्यः स्वीक्रियते, तादृग्वैलक्षण्यानुभवात्, तदाविद्यासहायं शब्दब्रह्मैव तदुपादानं वाच्यम्, अद्वैतशास्त्रेणाविद्यानिवृत्तौ च तन्मूलप्रपञ्चविगमे शुद्धं शब्दब्रह्मैवावशिष्यते, स एव मोक्ष इति निरवद्यम्। केवलं तस्य शब्दात्मकत्वे शुद्धशब्दत्वादिधर्म्मवत्त्वम्, निर्द्धर्मकत्वेऽप्यसदादिव्यावृत्तिवदशब्दादिव्यावृत्त्यैवोपपत्तिरिति संक्षेपः । द्वितीयमतावलम्बिनो वेदान्तिनस्तन्मतेऽखण्डमद्वितीयमानन्दैकरसं स्वप्रकाशं चैतन्यमेव जगतस्तत्त्वम्, अनिर्वचनीयस्यैव सर्पस्य रज्जुः । कथं तर्हि जीवेश्वरविभाग इति चेत्? अज्ञानरूपादुपाधेः, तथा ह्येकस्यैव मुखस्य दर्पणोपाधिसम्बन्धाद्बिम्बप्रतिविम्बभावः, एवं चिन्मात्रस्योक्तोपाधिसम्बन्धाज्जीवेश्वरभावो न तत्त्वान्तरमस्ति। अज्ञानं त्वनाद्यनिर्वचनीयमायाविद्यादिशब्दाभिधेयम्, तच्चैकेनैवोपपत्तावनेककल्पनानवकाशादेकमेवेत्येके। बद्धमुक्तव्यवस्था निरूपणाय नानेत्यन्ये । तदवस्थानि मूलाज्ञानानि व्यवहारसौकर्य्याय निरूपयन्ति–तत्रैव मायाविद्याशब्दद्वयनिमित्तं शक्तिद्वयं विक्षेपशक्तिरावर्णशक्तिश्च । कार्य्यजनकशक्तिर्विक्षेपशक्तिः, तिरोधानशक्तिरावर्णशक्तिः, यथावस्थारूपस्य रज्ज्वज्ञानस्य सर्पजननशक्तीः रज्जुतिरोधानशक्तिश्च । एवं मूलाज्ञानस्याद्वितीयपूर्णानन्दैकरसचिदावर्णशक्तिराकाशादिप्रपञ्चजननशक्तिश्चेति । निवृत्ते चाज्ञाने तन्निमित्ते च जीवेश्वरादिप्रपञ्चे चिन्मात्रमेव(वाव)शिष्यते जीवस्त्वज्ञानप्रतिबिम्बितं चैतन्यमिति विवरणाचार्य्याः "रूपं रूपं प्रति रूपी बभूवे"ति श्रुतेः । "एकधा बहुधा चैव दृश्यते जलचन्द्रवद्"इति स्मृतेश्च" न चामूर्त्तस्य प्रतिबिम्बाभावः शक्यो वक्तुम्, अमूर्तानामपि रूपपरिमाणादीनां गुणानामादर्शमूर्तद्रव्यस्यापि साभ्रनक्षत्राकाशस्य जानुमात्रे जले विशालरूपेण प्रतिबिम्बदर्शनात् । प्रतिबिम्बस्यापि च चिद्रूपत्वं प्रत्यक्षशास्त्राभ्यां

सिद्धम् । न च घटावच्छिन्नाकाशवदविद्यावच्छिन्नं चैतन्यमेव जीवोऽस्तु किं प्रतिविम्बत्वेनेति वाच्यम्, तथा सति जीव-भावेनावच्छिन्नस्य पुनरवच्छेदान्तरायोगात्, घटाकाशादौ तथादर्शनाद् ब्रह्मणः सर्वनियन्तृत्वानुपपत्तौ "यो विज्ञाने तिष्ठन् विज्ञानमन्तरायमयति" इति श्रुतिव्याकोपप्रसङ्गात् । प्रतिविम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रति-विम्बाकाशदर्शनाद्द्विगुणीकृत्य वृत्त्युपपत्तेर्जीवावच्छेदेपु ब्रह्मणोऽपि नियन्तृत्वादिरूपेणावस्थानमुपपद्यत इति न दोषः । अस्मिन्पक्षे विम्बचैतन्यं नेश्वरः, विम्बस्यापि प्रतिविम्बान्तरद्विगुणीकृत्य वृत्त्ययोगेन प्रतिविम्बात्मकजीवान्तरयामित्वा-नुपपत्तेः । कार्य्योपाधिभूतस्य शक्तिद्वयस्य व्यापकतया तत्प्रतिविम्बयोर्जीवेश्वरयोरपि व्यापकत्वाज्जीवान्तर्यामित्वश्रुते-रप्यव्याघातात्, अज्ञानप्रतिविम्बितमित्यत्राज्ञानपदं चाविद्यापरम् , अज्ञानप्रतिविम्बितं चैतन्यं साक्षी, स चोक्तशक्तिद्वय-प्रतिविम्बितो जीव इति, ईश्वरश्चवियं तु शुद्धमिति दिक् । एतेनाज्ञानप्रतिविम्बितं चैतन्यमीश्वरः, वुद्धिप्रतिविम्बितं चैतन्यं जीवः, अज्ञानोपहितं विम्बचैतन्यं शुद्धमिति संक्षेपशारीरकारमतमप्युपसङ्गृहीतं तात्पर्य्यतोऽभेदात् । अज्ञानावच्छिन्नं-चैतन्यं जीव इति वाचस्पतिमिश्राः, तेपामयमाशयः—वस्तुतः सजातीयविजातीयभेदशून्यं चैतन्यमनादिसिद्धानिर्वचनी-याज्ञानोपाध्यवच्छिन्नं जीव इति, अज्ञानं चेश्वरः इति द्वैविध्यं प्रतिपद्यते, "अज्ञातत्वं" अज्ञानविपयत्वं, तदेवेश्वरो-पाधिः, तच्च व्यापकमिति तदुपहितेश्वरस्यापि व्यापकत्वात्सर्वान्तर्य्यामित्वमप्युपपद्यते, विवरणाचार्य्यैस्त्ववच्छिन्नस्यैवे-श्वरत्वमवच्छिन्नस्य च जीवत्वं दूपितमिति नात्र दोपस्पर्शः । नन्वेवमज्ञातस्य चैतन्यस्येश्वरत्वे अहं मां न जानामीत्य-

मतेऽपि ईश्वरस्य प्रत्यक्षत्वमनापाद्यः सर्वस्यैव वस्तुनो ज्ञाततयाज्ञाततया वा साक्षि-
नुभवादीश्वरस्य प्रत्यक्षत्वापातः, न चाज्ञाततयेश्वरस्य प्रत्यक्षत्वमनापाद्यः सर्वस्यैव वस्तुनो ज्ञाततयाज्ञाततया वा साक्षि-
प्रत्यक्षत्वाङ्गीकारादिति वाच्यम्, नह्यज्ञाततयेश्वरप्रत्यक्षमापाद्यते, ईश्वरं न जानामीति येनाभ्युपगमव्याघातापत्तिः स्यात्,
किन्त्वहं मां न जानामीत्यज्ञानं चैतन्यमनुभूयते सचेश्वर इति तस्य स्वरूपेणापरोक्षत्वं स्यादिति चेत्? न, अहं मां न जा-
नामीत्यत्राज्ञाततया जीवस्याखण्डजगज्जीवेश्वरादिभ्रमाधिष्ठानचैतन्यरूपस्य भानेऽप्यज्ञानोपहितचैतन्यरूपस्येश्वरस्याभा-
नादज्ञानतास्फुरणे तदुपहितस्येश्वरस्य स्फुरणापत्तेः कर्तुमशक्यत्वात्, तस्यायोग्यत्वात् नहि घटस्फुरणे घटोपहिताका-
शादेरपि स्फुरणं केनचिदापादयितुं शक्यत इति। तत्र विशेष्यस्यायोग्यत्वम् अत्र तु विशेषणविशेष्ययोर्योग्यत्वमित्यस्ति
विशेष इति चेत्? न, तथाप्युपहितत्वसम्बन्धगर्भत्वेनादृष्टवज्जीवत्वेनेवायोग्यताया ध्रौव्यात्। आभासवादिनो वार्ति-
काचार्यास्तु दर्पणादौ मुखान्तरोत्पत्तिं स्वीकुर्वाणाश्चैतन्यस्यानादिभूताज्ञाने अज्ञानादिरेवाभासः समस्ति, नत्वसौ जीवो
जडत्वात्, अतस्तत्तादात्म्यापन्नं चैतन्यं जीव इत्याहुः। किमत्राभासाङ्गीकारे वीजमिति चेत्? चैतन्ये अहङ्काराध्यासस्य
निरुपाधिकस्येष्टत्वात्, निरुपाधिकाध्यासत्वावच्छेदेन च सादृश्यस्यापेक्षणात् आभासतादात्म्यापत्त्या च सादृश्यापन्ने*
चैतन्येऽहङ्काराध्याससम्भवात्, न चाभासाध्यासेऽपि तदपेक्षायामनवस्थापत्तिः, तस्यानादित्वात्, जन्याध्यास एव निरुपा-
धिके सादृश्यापेक्षणात्, न चाज्ञानाध्यासेनैव सादृश्यापत्तिः सुवचा, जाड्येन हि सादृश्यं वाच्यं, तच्च जडतादात्म्यापत्त्या,
न चाज्ञानं तादात्म्येनाध्यस्तम्, किन्त्वहमज्ञ इति संसर्गेणाध्यस्तमिति, अतोऽनाद्याभासतादात्म्याध्यासेन जाड्यापत्त्या

* 'आभासतादाम्यपन्नेऽन्यासादृश्यापन्ने' इति कल्पलतायाम्.

सादृश्ये सत्यहङ्काराध्यासो युज्यते । न चाभासे प्रमाणाभावः, आदर्शे मुखमिति स्पष्टं मुखान्तराभासात्, एकत्र क्लृप्तमन्यत्रापि प्रतिसन्धीयत इति न्यायेनाज्ञानेऽपि चैतन्याभासाङ्गीकारात्, । एवमन्तकरणादावपि चैतन्याभासोऽज्ञानगतचैतन्याभासः। अज्ञानगतचैतन्याभासस्तु जीवशब्दप्रवृत्तिनिमित्तम्, तत्तादात्म्यापन्नचैतन्यस्य जीवत्वादिति । विवरणाचार्य्यास्तु मुखान्तरोत्पत्तिं नेच्छन्ति, किन्तु मुखे अधिष्ठानभेदमात्रस्य द्वित्वापरपर्य्यायस्यादर्शस्थत्वस्य चानिर्वचनीयस्योत्पत्तिं तावतैव प्रतीत्युपपत्तेर्मुखान्तरकल्पने गौरवात् । न चैवं शुक्तावपि रजतोत्पत्तिर्नस्यात् तादात्म्यमात्रोत्पत्त्यैवेदं रजतमिति धीर्निर्वाहोपपत्तेरिति वाच्यम्, तथा सति रजतस्यापरोक्षत्वापत्तेः, मुखं त्वधिष्ठानपरोक्षमिन्द्रियसन्निकर्षात्, अत एवादर्शे मुखमित्यपरोक्षभ्रमोत्पत्तेः नानिर्वचनीयमुखान्तरोत्पत्तिः । न च मुखस्येन्द्रियसन्निकर्षाभावः, कतिपयावयवावच्छेदेन तत्सत्त्वात्, आसत्तेर्विशदावभासप्रतिबन्धकत्वेऽपि तत्रादर्शसन्निधानस्योत्तेजकत्वेन दोषाभावात् । आदर्शादिनाभिहतचक्षुषो मुखाभिमुखविजातीयसंयोगात्तदपरोक्षत्वमित्यपि कश्चित् । ननु किमित्येवं वर्ण्यते मुखमधिष्ठानमित्यादर्श एवाधिष्ठानमस्तु तत्र च मुखाभावाज्ञानेन मुखोत्पत्तिस्तत्संसर्गोत्पत्तिर्वास्तु, आदर्शे मुखमिति प्रतीतेरेवमप्युपपत्तेः, मुखं यद्यपरोक्षं तर्हि तत्संसर्गस्य, यदि च नापरोक्षं तर्हि तदुत्पत्तेः स्वीकर्तव्यत्वान्मुखाधिष्ठानस्य चानुभवाननुसारित्वादिति चेत् ? एवं ह्यधिष्ठानत्वाभिमतस्योपाधित्वोक्तौ सर्वभ्रमाणां सोपाधिकत्वे प्रसक्ते सोपाधिकनिरुपाधिकभ्रमव्यवच्छेदप्रसङ्गात्, 'लोहितः स्फटिकः' इत्यत्रापि शुक्त्यज्ञानाद्रजतभ्रमवज्जपाकुसुमत्वाज्ञानाल्लोहिते तस्मिन्स्फटिकतादात्म्यभ्रम इति सोपाधिकभ्रमत्वासिद्धेः, शक्यं ह्यत्रापि वक्तुम्, स्फटिको यद्यपरोक्षस्तर्हि तत्संसर्गमात्रमुत्पद्यते,

यदि नापरोक्षस्तर्हि तदुत्पत्तिस्तस्मान्नादर्शोऽधिष्ठानम्, किन्तु मुखमेव, तत्र च भेदोऽध्यस्यते न मुखान्तरं, प्रत्यभिज्ञानाच्च न मुखान्तरोत्पत्तिः स्वीक्रियते। कथं तर्हि भेदभ्रमोऽपि स्यात्, प्रत्यक्षप्रत्यभिज्ञानेनाज्ञानादिनिवृत्त्या भेदभ्रमनिवृत्तिप्रसङ्गादिति चेत्? उच्यते, सोपाधिकभ्रमनिवृत्तावुपाधिनिवृत्तेः पुष्कलकारणत्वान्न ततो भेदभ्रमनिवृत्तिः। मुखान्तरोत्पत्तिपक्षे तु सोपाधिकत्वमेव नास्ति, उपाधिर्हि उपसमीपे स्थित्वा स्वकीयं धर्म्ममन्यत्रादधातीत्युच्यते, नहि मुखान्तराध्यासे उपाधिरस्ति, रजताध्यासवत् भेदाध्यासे दर्पणस्योपाधित्वं संभवति, अतः सत्यपि प्रत्यभिज्ञाने यावदुपाधिभेदाध्यासानुवृत्तिर्युक्ता, तस्मान्मुखमधिष्ठानं तत्र भेदोऽध्यस्यते। एवं चाज्ञानादौ प्रतिबिम्बे सत्यपि नाभासान्तरम्, मानाभावात्। सादृश्यापत्तिस्त्वज्ञानाध्यासेन परिच्छिन्नत्वापत्त्याहङ्काराध्यासापेक्षिता भविष्यति, तस्मान्नाभासवादो ज्यायानिति विवरणाचार्य्याभिप्रायः। अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अज्ञानप्रतिबिम्बितं चैतन्यं जीव इति वा, अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः, अज्ञानोपहितं च जीव इति च मुख्यो वेदान्तसिद्धान्तः, एकजीववादाख्य इममेव दृष्टिसृष्टिवादमाचक्षते। अस्मिंश्च पक्षे जीव एवेश्वरज्ञानवशादुपादानं निमित्तं च दृश्यं च सर्वं प्रातीतिकम्, देहभेदाज्जीवभेदभ्रान्तिः। एकस्यैव स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यादात्मसाक्षात्कारे सति मोक्षः, शुकादीनां मोक्षश्रवणं चार्थवाद इत्याद्यूह्यम्। ननु वस्तुनि विकल्पासंभवात्कथं परस्परविरुद्धमतप्रामाण्यं तस्मात्किमत्र हेयं किमुपादेयमिति चेत्? क एवमाह वस्तुनि विकल्पो न सम्भवतीति, स्थाणुर्वा पुरुषो वा राक्षसो वेत्यादिविकल्पानां वस्तुनि प्रवृत्तिदर्शनात्। अतात्त्विकी सा कल्पना पुरुषबुद्धिमात्रप्रभवा इयं तु शास्त्रीया जीवेश्वरविभागादिव्यवस्थेति कथं

तत्र विकल्पस्पर्श इति चेत् ? नूनं अतिमेधावी भवान् येनेत्थं वदसि, अद्वितीयात्मतत्त्वं हि प्रधानं फलवत्त्वादज्ञातत्वाच्च प्रमेयम् । शास्त्रस्य जीवेश्वरविभागादिकल्पनास्तु पुरुषबुद्धिप्रभवा अपि शास्त्रेणानूद्यन्ते तत्त्वज्ञानोपयोगित्वात् "फलवत्सन्निधावफलं तदङ्गम्" इति न्यायात् भूमसिद्धस्यापि श्रुत्यानुवादनभावात् । एतेन द्वैतसमानाश्रयविषयत्वनियमाज्जडेव प्रामाण्याप्रयोजनाभावेनाज्ञानानङ्गीकारात्, तदवच्छिन्नचैतन्याज्ञानादेव तत्राज्ञानव्यवहारोपपत्तेः, प्रामाण्यस्य वाऽज्ञातज्ञापकत्वरूपत्वात्, अन्यथा स्मृतेरपि तदापत्तेरिति वेदान्तेषु सर्वत्रैवं विरोधेऽयमेव परिहारः, तदाह वार्तिककारः "यया यया भवेत्पुंसो व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रिया ज्ञेया साध्वी सा वानवस्थितेः" इति श्रुतितात्पर्यविषयीभूतार्थविरुद्धं तु मतं हेयमेवेति नातिप्रसङ्गः, स च जीवोऽज्ञानबहुत्ववादिनां हिरण्यगर्भविराडादिभेदेन नाना, अज्ञानैक्येऽपि तत्तच्छक्तिभेदात्तज्ञान्तकरणभेदाद्वा नानेत्यपि वदन्ति । तत्र (तत्त्वा) तत्त्वज्ञानेन शक्तिरन्तःकरणस्य वा निवृत्तिरिति बद्धमुक्तव्यवस्था जीवभेद एव क्रममुक्तिफलानां हिरण्यगर्भाद्युपासनावाक्यानां "न तस्य प्राणाः" इत्यादीनां चाञ्जस्येनोपपत्तिः, एकजीववादे तूपासनावाक्यानां क्रममुक्तिफलश्रवणमर्थवादमात्रं, क्रमेणैव मुक्त्यङ्गीकारे क्रममुक्तिफलानामुपासनानां बहुत्वेनैकस्यैव फलवत्त्वेऽपीतरेषु तच्छ्रवणस्यार्थवादताया आवश्यकत्वात्, फलवत्ता तु तासां सत्त्वशुद्धिद्वाराश्रयणाद्यधिकारोपयोगात्, प्रमातृभेदाङ्गीकारात्तत्तत्फलभोगोत्तरमिमं[1]मिति विशेषणादेतत्कल्पावच्छेदेन मानवभवानावृत्त्या वा भविष्यति, तदेवं व्यवस्थितमेकानेकवादिनां जीवस्वरूपम् । तत्रान्तःकरणमध्यस्यतेऽहमिति रज्ज्वामिव

---

[1] "इम मानवमावर्तं नावर्तन्ते" इति श्रुतौ 'इमम्' ।

सर्पः केवलस्य तस्य साक्षिभास्यत्वात्, तत्तत्कार्य्याकारपरिणतस्यैव साक्षिणा भानमित्यहमाकारेण परिणतस्य तस्याध्यासोऽयमहङ्काराध्यास इति गीयते। अयं च न सोपाधिक उपाधेरभावात्, अहमज्ञ इति त्वहङ्काराज्ञानयोरेकचैतन्याध्याभादयःपिण्डयोरेकवह्निसम्बन्धादयो दहतीतिवत्। तच्चान्तःकरणं स्मृतिप्रमाणवृत्तिसङ्कल्पविकल्पाहंवृत्त्याकारेण परिणतं चित्तबुद्धिमनोऽहङ्कारशब्दैर्व्यवह्रियते, इदमेवात्मतादात्म्येनाध्यस्यमानमात्मनि सुखदुःखादिस्वधर्म्माध्यासे उपाधिः, स्फटिके जपाकुसुममिव लौहित्यावभासे। एवं प्राणादयस्तद्धर्म्माश्चाशनीयाः पिपासादयः तथा, श्रोत्रादयो वागादयश्च तद्धर्म्माश्च बधिरत्वान्धत्वादयोऽध्यस्यन्ते, तथा देहस्तद्धर्म्माश्च स्थूलत्वादय आत्मन्यध्यस्यन्ते। तत्रेन्द्रियादीनां न तादात्म्याध्यासः अहं श्रोत्रमित्यप्रतीतेः, देहस्तु मनुष्योऽहमितिप्रतीतेस्तादात्म्येनाध्यस्यते, एवं चैतन्यस्याप्यहङ्कारादिषु देहपर्य्यन्तेष्वध्यासः स्वीकार्य्यः, अध्यासव्यवधानतारतम्याच्च प्रेमतारतम्यं, तदुक्तं वार्तिकामृते "वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियं। इन्द्रियेभ्यः परः प्राणाः प्राणादात्मा परः प्रियः" ॥ १ ॥ तेनान्योन्याध्यासाच्चिदचिद्ग्रन्थिरूपोऽयमध्यासः समुद्रालम्बनभ्रमवदयमत्रेतरेतराध्यासस्याभ्युपगन्तव्यत्वात्। अयमेव संसारो मायाशबलाच्चिदात्मना आकाशादिक्रमेण लिङ्गशरीरात्मकापञ्चीकृतभूतोत्पत्तौ केषाञ्चिन्मते तेभ्य एव पञ्चीकृतभूतोत्पत्तौ संप्रदायमते च तेषामेव पंचीकरणप्रक्रियाप्रस्थानां तत्त्वस्वीकारे तेभ्यो ब्रह्माण्डभूधरादिचतुर्दशभुवनचतुर्विधस्थूलशरीरोत्पत्तेः अत एव सिद्धाभिधानात्,(धानं), अथ कथमेतस्य निवृत्तिरिति चेत्? शृणु, कश्चित् खलु पुरुषधुरन्धरो नित्याध्ययनविधिनाधीतवेदान्तः साङ्गाध्ययनबलाद्वेदान्तवाक्यानामापाततोऽर्थमधिगच्छति, काम्यत्वे सति कथमध्ययनविधेर्नित्यत्वमिति चेत्? काम्यत्वेऽपि

धर्म्मा(अर्था)वबोधफलकत्वेन फलतो नित्यत्वस्याबाधात्, एतच्च मीमांसकमतेनोच्यते, स्वमते त्ववाप्तिफलकत्वेन फलतो नित्यत्वमध्ययनस्य, अहरहःकर्तव्यब्रह्मयज्ञाद्यर्थतयाऽवाप्तेरावश्यकत्वात्। अध्ययनविधेर्हि फलाकाङ्क्षायां निरतिशयसुखात्मकोऽपि स्वर्गो यथा न फलं, अदृष्टत्वात्, एवं दृष्टोऽप्यर्थावबोधो न फलं अनन्तरादृष्टत्वादश्रुतत्वाच्च, अवाप्तिस्त्वनन्तरदृष्टा श्रुता च फलत्वेन संबध्येत, यथाहि—फलाकाङ्क्षायां दृष्टे सति नादृष्टं कल्प्यम्, एवमनन्तरदृष्टे सति न व्यवहितदृष्टं कल्प्यम्, श्रुते च सति नाश्रुतं कल्प्यम्, अर्थावबोधवादिनाप्यवाप्तेरङ्गीकारात्, तन्मतेऽपि "पुरोहितं वृणीत" इत्यत्र वरसंस्कृतेन पुरोहितेनेष्टं भावयेदितिवत् "स्वाध्यायोऽध्येतव्य" इत्यत्रापि अध्ययनसंस्कृतेन स्वाध्यायेनार्थावबोधं भावयेदिति वाक्यार्थस्याभ्युपगमात् 'संस्कारश्चावाप्तिः' इत्यावश्यकमस्याः*, किञ्च क्षत्रियस्य निषादेष्ट्यादिवाक्याध्ययने अर्थावबोधफलाभावादवाप्तिरेव फलत्वेनाश्रयणीया, तस्मादध्ययनविधेः सर्वत्रावाप्तिरेव फलमिति युक्तम्। अथ केयमापातता? उच्यते, वेदान्तजन्यज्ञानस्य निस्सामान्यविशेषब्रह्मावधारणरूपस्यापि संशयाविरोधितैव। साच दोषविशेषसाचिव्येन समानप्रकारकसमानविशेष्यकनिश्चयत्वेनापि (संभवति) संशयप्रतिबन्धकत्वस्यापि घटवद्भूतलमिति निश्चयसत्त्वस्य भूतले घटो नवेति संशयाप्रतिबन्धकत्वेन वक्तुमशक्यत्वात्, सति दोषविशेषे निश्चितेऽपि संशयोत्पत्तेः, असति तदभावादेव संशयाभावादन्वयव्यतिरेकाभ्यां तस्यैव तद्धेतुत्वात्। किञ्च सत्यपि निश्चयेऽप्रामाण्यसंशयेन संशयदर्शनादप्रामाण्यसंशयानास्कंदितत्वेन प्रतिबन्धकत्वं वाच्यं तद्वरं दोषविशेषानास्कन्दितत्वेनैव तथात्वं युक्तम्, अनुगतत्वाल्लाघ-

* श्रुतेः।

वाच्च । अत एव स्वतः प्रामाण्यनिश्चयेऽप्यनभ्यासादिदोषविशेषात्काशीस्थस्यार्द्रमरिचप्रत्यक्षेऽपि वा संभावनादोषविशे-
पात्संशयः, त(द्व)दिहापि वेदान्तवाक्यादधीताज्जातेऽपि ब्रह्मनिश्चयेऽसंभावनादिदोषविशेषात्संशयोत्पत्तौ तदविरोधि-
तैव तस्यापाततेति । एककोटिकानिश्चयरूपैवापाततेति तु न युक्तम्, अदृष्टकल्पनापत्तेः, तदयमापातज्ञानवानिह जन्मनि
जन्मान्तरे वानुष्ठितकर्म्मभिर्विशुद्धान्तःकरणो नित्यानित्यविवेकादिकं लभते । ननु कथं कर्म्मणां तत्तत्फलसाधनाना-
मन्तःकरणशोधकत्वमिति चेद् ? ज्ञानाज्ञानकृतानां सर्वपापानां पुरुषेषु सत्त्वात्तत्क्षयस्य सदाभीप्सितत्वाद्दुःखवत्पाप-
स्यापि द्वेष्यतया तन्निवृत्तेः काम्यत्वादहरहःकर्त्तव्यत्वेनावगतप्रत्ययानां नित्यानां तेनैव फलवत्त्वाँद्धर्म्मेण पापमपनुदति ।
"योगिनः कर्म्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये" इत्यादिशास्त्राच्च । यद्वा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति
यज्ञेन" इत्यादि श्रुत्या तत्तत्फलसंयुक्तानामपि कर्म्मणां संयोगपृथक्त्वन्यायेन विविदिषासंयोगस्य ज्ञानसंयोगस्य वा
विधानात् तत्रान्तःकरणशुद्धिद्वारं, एकस्य तूभयत्वे संयोगपृथक्त्वमिति न्यायः, संयोगो विधिस्तत्पृथक्त्वमेकस्योभय-
रूपत्वे हेतुरिति तदर्थः, त(द्व)दिह तत्तत्फलार्थान्यपि कर्म्माणि तमेतमित्यादिवचनाद्विविदिषार्थानि वेदनार्थानि वा
द्रष्टव्यानीति । कथं पुनरत्र प्रकरणान्तरन्यायेन न कर्म्मान्तरत्वम्, प्रकरणान्तरे 'प्रयोजनान्यत्वम्' इत्यत्र ह्येतत्सिद्धम्,
यत्र प्रकरणान्तरमनुपादेयगुणश्च तत्र कर्म्मान्तरम्, 'सायं प्रातर्जुहोति' इत्यादौ 'यदा हवनीयं जुहोति' इत्यादौ (च) कर्म्मा-
न्तरविधिवारणाय विशेषणद्वयम्, त(द्व)दिह मासमग्निहोत्रं जुहोति' इत्यत्रैवोभयसत्त्वात्कर्म्मान्तरत्वं दुर्वारमिति चेत् ?

* 'सर्गादेर्नियतानुपस्थितिकत्वात् प्रत्यवायप्रागभावस्य चासाध्यत्वादिति' इत्यधिकं कल्पलतायाम् ।

अध्ययनविधेरवास्तिफलकत्वप्रतिपादनपुरस्सरंमीमांसकमतखण्डने-आपाततःप्रतिपादनम्

उच्यते, न तावदत्र यज्ञादिसंबन्धो विधिः 'जुहोति' इतिवच्छ्रूयते, येनापूर्वं यज्ञादिर्विधीयते, कल्पनायां तु लाघवम्। 'जीघातुः' इति आख्यातासमानाधिकरणव्यवहितपरामर्शसमर्थसुबन्तपरामृष्टानां कर्म्मणां फलसंबन्धमात्रविधानोपपत्तौ नान्यत्कल्पयितुं युक्तम्, आख्यातसमानाधिकरणो हि मासमग्निहोत्रमितिशब्दस्तत्परतन्त्रत्वाच्च व्यवहितमित्यग्निहोत्रं परामृशति, यज्ञेनेत्यादि सुबन्तस्त्वाख्यातसमानाधिकरणो व्यवहितपरामर्शे समर्थ इति परमार्थः। ननु किमत्र पशुकामस्योद्भिच्चित्रादिष्विव विविदिषादिकामस्य यज्ञादिषु भिन्नवाक्योपात्तत्वाद्विकल्पः यथा दध्यादीनामग्निहोत्रहोमे, उत स्वर्गकामस्याग्नेयादिष्विव समुच्चय इति चेत्? अत्रत्वेकवाक्योपात्तत्वाद्दर्शादिवत्समुच्चयः। तत्र कथमेकवाक्यतेति विचार्यते अर्थैकत्वादेकवाक्यं यथा 'अग्निहोत्रं जुहोति' इति, 'अरुणयैकहायन्या' इत्यादौ तु सत्यप्यारुण्यार्थभेदे विशिष्टार्थविधानाद्विशिष्टार्थैकत्वेनैकवाक्यत्वम्, सत्यपि च विशिष्टविधानस्य गौरवप्रसक्तत्वे अगत्या तदाश्रयणम्, क्रियायाः प्रकरणान्तरप्राप्तौ हि विशेषणमात्रविधानम्, यथा "दध्ना जुहोति" इति गुणविधौ, तत्राप्येकमेव विशेषणं विधातुं शक्यते, नानेकम्, वाक्यभेदप्रसङ्गात्, अप्राप्ता हि क्रियानेकविशेषणान्युपसङ्गृह्णन्ती (ह्लातीति) विशिष्टा विधातुं शक्या, प्राप्तायां तु तस्यामनेकार्थविधाने विधिप्रत्ययावृत्तिलक्षणो वाक्यभेदः प्रसज्यते। नच "यदग्रमेव प्रजायत" "यवसायं जुहोति" जातपुत्रः कृष्णकेशाग्नी नादधीते" तत्र च कर्म्मानुवादेन गुणद्वयविधानेऽप्येकवाक्यवन्नानुपपत्तिः, पूर्वत्र "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इति मन्त्रवर्णप्राप्तत्वादग्नेः प्रजापतिमात्रविधानं, उत्तरत्र च जातपुत्रकृष्णकेशपदद्वयोपलक्षितावस्थाविशेषस्याधानानुवादेन विधानमित्येवं वाक्यभेदनिराकरणात्, तदिदमुक्तं—"प्राप्ते कर्म्मणि नानेको, विधातुं शक्यते

गुणः" इति । अत्र च कर्म्मणीत्युपलक्षणं प्राप्तमात्रमुद्दिश्यानेकविधानस्याशक्यत्वात् । अत एव "ग्रहसंमार्ष्टी" त्यत्र
ग्रहोद्देशेनैकत्वसंमार्गयोर्विधाने वाक्यभेदः एकोद्देशेनानेकविधानवदनेकोद्देशेनैकविधानमप्यशक्यम्, यथात्रैवैकत्वग्रहो-
द्देशेन संमार्गविधानम् । त(द्व)दिह "तमेतमि" त्यादिविधौ न तावदरुणादिवाक्यवदेकविशिष्टक्रियाबोधकत्वम्, असंभ-
वादनङ्गीकाराच्च । नापि "दध्ना जुहोती" तिवत् कस्याञ्चित्क्रियायामेकविशेषणविधानम्, उक्तहेतोरेव । यज्ञदानादीन्यु-
द्दिश्य विविदिषाफलसंबन्धविधाने एकत्वग्रहोद्देशेन संमार्गविधानवद्विविदिषाफलमुद्दिश्य यज्ञदानादिविधाने च ग्रहो-
द्देशेनैकत्वसंमार्गविधानवत्कथं न वाक्यभेदः । अथ "दर्शपौर्णमासीभ्यां स्वर्गकामो यजेत" इत्यत्रैकस्वर्गोद्देशेन दर्शपौर्ण-
मास्यात्मकानेकयागविधानवद्विविदिषोद्देशेन यज्ञदानाद्यनेकविधाने न वाक्यभेद इति चेत् ? न, तत्र हि दर्शपूर्णमास-
पदेन न कालविधानं उत्पत्तिवाक्यैरेव प्राप्तत्वात्, अतो दर्शपूर्णमासपदं तत्प्रख्यन्यायसिद्धं नामधेयम् । तत्प्रख्यं
चान्यशास्त्रं यथा "अग्निहोत्रं जुहोति" इत्यत्र मन्त्रवर्णेनाग्नेः प्राप्तत्वान्नाग्निदेवताविधिः, किन्तु नामधेयं तथात्र द्रष्टव्यम् ।
तथा च तत्र दर्शपौर्णमासनामधेयसमानाधिकरणैकयजतिपदाभिहितानां षण्णामपि यागानां फलोद्देशेन विधाने न
वाक्यभेदः, यथा "व्रीहिभिर्यजेत" इत्यत्रैकपदोपात्तानां व्रीहीणां यागोद्देशेन विधौ । अत्र हि प्राप्तेऽपि कर्म्मणि व्रीहि-
तद्बहुत्वविशिष्टैककारकं विधीयते । "चित्रया यजेत" इत्यत्र संभवत्यपि चित्रत्वस्त्रीत्वविशिष्टैककारकविधाने गौरवा-
न्नामधेयाश्रयणम्, तदेवं व्रीहिवाक्यतुल्यत्वाद्दर्शपौर्णमासीभ्यामित्यादावेकपदोपात्तत्वान्न वाक्यभेदो, 'विविदिषन्ती' त्यत्र
तु भिन्नपदोपात्तानां यज्ञादीनां भिन्नकारकवतां च न व्रीहिवाक्यतुल्यता । "ये मध्यमास्तानग्नये दात्रे" इत्यादौ तु

मीमांसकमतखण्डनप्रस्तावएकवाक्यताप्रतिपादनपूर्वकंसमुच्चयोपपादनम्

सत्यपि भेदे सामानाधिकरण्येन प्रतिपादितं विशिष्टदेवताकारकमेकमेवेति न वाक्यभेदः, "यज्ञेन दानेन" इति तु न सामानाधिकरण्यमस्ति । तस्मादेकविधाने अन्याविधानादेकस्यात्मपदस्य श्रोतव्यादिवाक्येष्वनुसङ्गवदेकस्य विविदिषन्ति पदस्य यज्ञेनेत्यादौ प्रत्येकमनुषङ्गादिह वाक्यभेदो विध्यावृत्तिलक्षणः । कथं तर्हि समुच्चयः ? उच्यते "अरुणया क्रीणाति वा समाक्रीणाति" इत्यादिभिन्नवाक्यविहितानामपि सोमप्राप्त्यर्थानां क्रियाणामिव संभवत्समुच्चये यज्ञादीनां परिकल्पितान्तःकरणशुद्धिद्वाराणां भविष्यति, "अरुणया" इत्यादयो हि नियमविधयः, तत्र चार्थिकीतरनिवृत्तिरिति "अरुणाक्रयेणैव सोमं भावयेदित्यादिरर्थः फलितः स च नित्यवत्समुच्चयेनोपपद्यत इति संभवत्समुच्चयोऽयम्, न चैवं दध्यादिषु कथं नायमित्याशङ्कनीयम्, तत्र होमनिष्पत्तेर्द्वारस्यैकेनैव सिद्धेः "अरुणया" इत्यादौ तु क्रयविधेर्दृष्टार्थत्वादेकेनैव क्रयेणानतिसिद्धौ नियमविधित्वम्, अन्यथा तु प्रत्येकावगतं नियमं कार्य्यानुरोधेन त्यक्त्वा वाक्यान्तरविहितक्रयसापेक्षत्वं पूर्वक्रयस्य कल्प्यत इति युक्तः संभवत्समुच्चयः, त(द्व)दिहापि यज्ञादीनामसौ युक्तः, अत एव यज्ञानधिकारिणां ब्रह्मचारिणां वेदानुवचनेन केवलेनाप्यन्तःकरणशुद्धिद्वारा विविदिषासिद्धिः । तथा च स्मृतिः "जपेनैव तु संसिद्ध्येत्" इति । संभवति चाधिकारिविशेषस्य विविदिषाद्युद्देशेन वेदानुवचनाद्यनुष्ठानमिति । न च स्वर्गकामोऽग्निहोत्रवत्सकृदनुष्ठाननियमो, यज्ञाद्यनुष्ठानस्यान्तःकरणशुद्धिपर्य्यन्तत्वात्, तस्याश्च साधनचतुष्टयसंपत्तिगम्यत्वात्, तेन यस्य सकृदनुष्ठानादन्तःकरणशुद्धिर्न तस्यावृत्तिरिति । अथवा जातपुत्र इतिवत् यज्ञादिपदैः प्रसिद्धं शतपथविहितं कर्म्म साम्राज्यमुपलक्ष्य विविदिषादिफलोद्देशेन विधीयत इति न वाक्यभेदः, संभवत्समुच्चयश्चैवमुपपद्यते । यद्वा ईश्वरार्पणबुद्ध्यानुष्ठितानां कर्म्मणामन्तःकरण-

शुद्धिः फलम्, 'यत्करोपि' इत्यादिस्मृतेः, तेन सुष्ठूक्तं "कर्मभिः शुद्धान्तःकरणो नित्यविवेकादि लभत" इति । सच नित्यानित्यविवेक 'इदं सर्वमनित्यं दृष्टश्रुताभ्याम्, एतस्य विमर्शाधिष्ठानं किञ्चिन्नित्यम्' इत्येवमालोचनात्मकः । तत ऐहिकपारलौकिकफलेच्छाविरोधिचेतोवृत्तिविशेषात्मको विरागः । ततः शमादिपट्कम्, शम १ दम २ उपरति ३ तितिक्षा ४ समाधान ५ श्रद्धाः ६ अन्तःकरणनिग्रहः शमः, वाह्येन्द्रियनिग्रहो दमः, उपरतिः संन्यासः, द्वन्द्वसहिष्णुत्वं तितिक्षा, श्रवणादिप्रावण्यं समाधानम्, साम्प्रदायिके विश्वासः श्रद्धा । ततो मुमुक्षा—मोक्षेच्छा । तदेतत्साधनचतुष्टयं श्रवणाधिकारिविशेषणम् । यत्तु मुमुक्षैव तथा, काम्याधिकारे कामनाया एव निरपेक्षाधिकारनिमित्तत्वादिति, तन्न, काम्याधिकारे सामर्थ्यादेरप्यधिकारत्वात् । अथ कामनार्थिकं सामर्थ्याद्यपेक्षते, न श्रुतमन्यत्, तत्किं श्रुतिलिङ्गयोर्लिङ्गं बलवत्, अपि चैवं राजसूयादौ स्वराज्यकाममात्रस्य समर्थस्याधिकारः प्रसज्येत, अथ "राजा राजसूयेन यजेत" इति श्रुतेर्बलीयस्त्वात् राजत्वमप्यधिकारिविशेषणं तर्ह्यत्रापि विवेकादिकमपि श्रुतं किं ततो न तथा, युक्तेस्तुल्यत्वात् । अथ विवेकादीनि सर्वत्र सर्वाणि(न) श्रूयन्ते, किन्तु क्वचित्किञ्चित् ततश्चैकैकशाखावाक्यात्प्रसक्ता धीः सर्ववेदान्तप्रत्ययन्यायेन वाध्यते, मुमुक्षा तु सर्वशाखास्ववाधितेति सैवाश्रयणीयेति चेत् ? न, विवेकवता श्रवणं कर्तव्यमित्याद्येकैकशाखावाक्यात् "अविवेकिनः श्रवणकर्तव्यता न" इत्यर्थात्प्रतीतावपि साधनान्तरसम्पन्नस्य विवेकिनस्तदकर्तव्यत्वाप्रतीतेरर्थसमाजस्योक्तन्यायावाध्यत्वात्, तस्मात्साधनचतुष्टयसंपन्न एव श्रवणाधिकारी । नचोपरतिशब्दवाच्यस्य संन्यासस्य श्रवणाधिकारत्वानुपपत्तिः, तस्य श्रवणाङ्गत्वे मानाभावात्, अज्ञानाङ्गत्वस्यैव न्याय्यत्वादित्याशङ्कनीयम् । श्रवणस्य दृष्टार्थत्वात्,

मीमांसकमतखण्डणप्रस्तावे विवेकादिसाधनचतुष्टयसम्पन्नः श्रवणाधिकारीतिनिरूपणप्रसङ्गे 'मुमुक्षैव तथा' इतिमतस्य खण्डणम्

दृष्टेनवार्थवादिकेन फलेन फलवत्ताया निर्णयात्तत्संनिधौ श्रुतस्याफलस्य सन्न्यासस्य प्रयाजादिवदङ्गत्वाश्रवणस्यार्योक्तिकत्वात्, प्रमाणं च तत्र प्रयाजादिवत्प्रकरणमेव । अथैतदात्मन एव प्रकरणं न श्रवणस्यैवेति चेत् ? न, उपक्रमोपसंहारादिलिङ्गैरात्मनः प्रतिपाद्यत्वप्रतीतेरात्मनः प्रकरणमित्यभिधीयमानेऽप्यङ्गत्वावेदकस्योभयाकाङ्क्षारूपस्य प्रकरणस्यापि सुव्यवस्थितत्वात्, तथाहि यथा प्रयाजा उपकार्याकाङ्क्षा प्रधानयागोप्युपकारकाकाङ्क्ष इत्युभयाकाङ्क्षा प्रयाजानां प्रकरणम्, तथा सन्न्यासोऽप्युपकार्याकाङ्क्षः श्रवणमप्युपकारकाङ्क्षमित्युभयाकाङ्क्षाप्रकरणं सन्न्यासस्य, तदेव च श्रवणाङ्गत्वसाधकमिति किमत्रार्थवादिकफलकल्पनाक्लेशेनेति दिक् । तस्मात् युक्तमुक्तं साधनचतुष्टयसम्पन्नः श्रवणाद्यधिकारीति । सोऽयमधिकारी श्रोत्रियं ब्रह्मनिष्ठं गुरुमनुसृतः श्रवणादि सम्पादयति । श्रवणादिकं तु श्रवणं १ मननं २ निदिध्यासनं ३ चेति । श्रवणं नाम वेदान्तानां शक्तितात्पर्य्यावधारणानुकूलो व्यापारः, श्रुतस्यार्थस्य युक्तितः सन्धानं मननम्, विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनम् । एतेषां श्रवणं प्रधानम्' इतरे फलोपकार्य्याङ्गे श्रोतव्यादिवाक्येषु प्राथमिकत्वात् श्रवणविधेरेवार्थवादिकफल(कल्पनयेतरयोस्तत्क)ल्पनाक्लेशनिवृत्तेः । श्रवणस्य तत्त्वज्ञाने प्रधानभूतशब्दप्रमाणस्वरूपनिर्वाहकतया प्राधान्यम्, असति श्रवणे प्रमाणासंभावनया तत्त्वज्ञानानुदयात्, अत्यन्तानधिगतार्थे गृहीतशक्तितात्पर्य्यकस्य शब्दस्यैव प्रमाजनकत्वात्तन्निर्वाहकस्य श्रवणस्य प्राधान्यमिति तात्पर्य्यम् । विधिश्चात्र नियमाख्य एव दृष्टा, दृष्टार्थत्वात्, दृष्टस्यापि तत्त्वज्ञानोपयोगित्वात् । नच नियमविधिस्थले फले साधनान्तरस्य पा(त्य)क्षिकी प्राप्तिस्तत्र साच न निर्विशेषा आत्मज्ञाने श्रवणातिरिक्तस्याप्राप्तेरिति कथं नियमविधिः, न च व्रीहितु-

श्रवणातिरिक्तस्य प्रत्यक्षादेः प्राप्तेरदोषफलतावच्छेदका-
षविमोकत्वपुरस्कारेणावघातातिरिक्तस्येवात्मज्ञानत्वपुरस्कारेण अत एवापूर्वापूर्वव्रीहितुषविमोकोऽपि दलनादिना कर्तुं शक्यत इत्यवघातो नियम्यते,
वच्छिन्नसाधनान्तरप्राप्तेरपेक्षितत्वात् अत एवापूर्वापूर्वव्रीहितुषविमोकोऽपि दलनादिना कर्तुं शक्यत इत्यवघातो नियम्यते, अत एव
आत्मज्ञानमात्रे प्रत्यक्षादिप्रसरान्नियमविध्यादरे च सुखमात्रे साधनान्तरप्राप्तेः 'यजेत' इत्यादावपि तत्प्रसङ्गतः, अत एव
न भ्रान्त्या साधनान्तरप्राप्तेरपि नियमविध्यङ्गत्वं 'यजेत' इत्यादावतिप्रसङ्गादेवेति वाच्यम्, निर्विशेषात्मबोधेऽपि
"इतिहासपुराणाद्यैर्वेदार्थमुपबृंहयेत्" इत्यादिना पुराणप्राकृतवाक्यश्रवणादेः प्राप्तत्वाद्वेदान्तश्रवणं नियम्यत इति दोषा-
भावात्। एतच्च श्रवणाद्यावृत्तं तत्त्वधीहेतुः, दृष्टार्थत्वात्, तदेवं बहुजन्मलब्धपरिपाकवशादसौ 'तत्त्वमसि' आदिवाक्या-
र्थविशुद्धं प्रत्यगभिन्नं परमात्मानं साक्षात्कुरुते। नच प्रामाण्यस्योत्पत्तौ स्वतःस्वभङ्गः, श्रवणादेः प्रतिबन्धकनिवर्तकत्वा-
त्तन्निवृत्तेश्च तुच्छत्वेनोत्पत्तावतिरिक्तानपेक्षणात्। 'तत् त्वम्' इतिपदयोः परोक्षत्वापरोक्षत्वविशिष्टचैतन्यरूपपृथगर्थवाच-
कयोः श्रूयमाणं सामानाधिकरण्यं न तावत् सिंहो देवदत्त इतिवद्गौणम्, मुख्ये संभवति तस्यान्याय्यत्वात्। नापि
'मनो ब्रह्म' इत्यादिवदुपासनार्थम्, श्रुतहानाश्रुतकल्पनाप्रसङ्गात्। मुख्यत्वेऽपि न नीलोत्पलादिवत्सामानाधिकरण्यम्,
गुणगुणिभावाद्यसम्भवात्, निर्गुणाऽस्थूलादिवचनविरोधाच्च। नापि यः सर्पः सा रज्जुरितिवद्बाधीयं, उभयोश्चिद्रूपतया
बाधायोगात् मुक्त्यभावप्रसङ्गाच्च, नहि स्वबाधार्थं जीवप्रवृत्तिरुपपद्यते। तस्मात्पदार्थयोः परस्परव्यावर्तकतया विशेषण-
विशेष्यभावप्रतीत्यनन्तरं लक्षणया सोऽयं देवदत्त इतिवद्विशुद्धप्रत्यगभिन्नाखण्डपरमात्मप्रतीतिः साच लक्षणा पदद्व-
येऽपि, अन्यथाऽखण्डार्थप्रतीत्यनुपपत्तेः लक्षणाबीजविरोधासमाधानाच्च। इयं लक्षणा विशेषणांशत्यागाद्विशेष्यांशात्यागाच्च

जहदजहती(भागलक्षणा च गीयते)। नन्वेवं चैतन्याद्वैतसिद्धावपि कथं प्रपञ्चस्य पारमार्थिकत्वाभाव इति चेत्? उच्यते, यदि त्वंपदार्थे भोक्तृत्वादिपारमार्थिकं कथं तत्पदार्थैक्यसिद्धिः, एवं तत्पदार्थेऽपि परोक्ष्यत्वादि यदि पारमार्थिकं कथं त्वंपदार्थैक्यसिद्धिः, तदेवं भोक्तृत्वादेः कल्पितत्वे भोग्यादिकल्पितमेव, एवं जगत्कर्तृत्वादेः कल्पितत्वे जगतः कल्पितत्वमित्यतः 'तत्त्वमसि' आदिवाक्यसामर्थ्येनैव निरस्तसमस्तप्रपञ्चात्म्यैक्यसिद्धिः। सोऽयमित्यत्रेव पदाद्भेदभ्रमानिवृत्तेर्महावाक्याश्रयणस्यावश्यकत्वम्। तदिदमात्मज्ञानमुत्पन्नमेवानन्तजन्मार्जितकर्म्मराशिं विनाशयति "क्षीयन्ते चास्य कर्म्माणीति श्रुतेः। नच देहनाशप्रसङ्गः, प्रारब्धस्याविनाशात् तस्य "तावदेव चिरं यावन्न विमोक्षेऽथ सम्पत्स्ये" इति श्रुतेः, कर्म्मविपाकेन प्रारब्धनिवृत्तावप्युक्तशास्त्रेण ज्ञानानिवर्त्यत्वाभिधानात्, ततश्च ज्ञानेन तदानीमेवाज्ञाने सर्वात्मना निवर्तयितव्ये प्रारब्धप्रतिबन्धादनिवृत्तिः। तस्यां चावस्थायां प्रारब्धफलं भुञ्जानः सकलसंसारं वाधितानुवृत्त्या पश्यन् स्वात्मारामो विधिनिषेधाधिकारशून्यः संस्कारमात्रात्सदाचारः प्रारब्धक्षयं प्रतीक्षमाणो जीवन्मुक्त इत्युच्यते। अस्य प्रारब्धक्षये सशक्तिकनिरवशेषाज्ञाननिवृत्तौ परममुक्तिः। ननु केयमज्ञाननिवृत्तिः, न सती, नाप्यसती, नापि सदसती, ज्ञानजन्यत्वाद्वैतप्रसङ्गोद्देश्यत्वविरोधेभ्यश्च, अस्तु तर्ह्यनिर्वचनीया जन्यत्वात्तदुक्तं "जन्यत्वमेव जन्यस्य मायिकत्वसमर्थकमिति" मैवं, अनिर्वचनीयस्य ज्ञाननिवर्त्यत्वनियमेन निवृत्तिपरम्पराप्रसङ्गात्, सदद्वैतव्याकोपमङ्गीकृत्य तस्या असत्त्वाद्विधानेऽपि विना प्रमाणमद्वैतसङ्कोच एव दूषणम्, पञ्चमप्रकाराश्रयणं त्वत्यन्ताप्रसिद्धम्। अस्तु तर्हि चैतन्यात्मिकेति चेत्? न, जन्यत्वादेव। नास्त्येव जन्यत्वमिति चेत्? न, ज्ञानानर्थ(क्य) प्रसङ्गात्, चैतन्यस्य सदा सत्त्वेन प्रयत्नविशेषानुपपत्तेश्च। अत्र

केचित्। तत्त्वज्ञानोपलक्षितं चैतन्यमेवाज्ञाननिवृत्तिः तच्च न तत्त्वज्ञानतः प्रागस्ति,उपलक्षणत्वस्य संबन्धाधीनत्वात् ,(यथा) काकसंबन्धो हि गृहस्य काकोपलक्षितत्वं, तदपि न, ज्ञानोपलक्षितस्यापि सत्त्वेऽद्वैतव्याघातात् , असत्त्वे उद्देश्यत्वानुपपत्तेः, मिथ्यात्वे ज्ञाननिवर्त्यत्वापत्तेः, चिन्मात्रत्वे उक्तदोषानतिवृत्तेः । नच तत्त्वज्ञानानुपलक्षितभिन्नं चैतन्यमेव सा, अवस्थाभेदं विना तस्यापि दुर्वचस्त्वादतो दुर्वचस्वरूपेयमज्ञाननिवृत्तिः, अत्रोच्यते, नाज्ञानस्य निवृत्तिर्ध्वंसः, रूपान्तरपरिणतोपादानस्यैव तद्रूपत्वात्, घटध्वंसो हि चूर्णाकारपरिणता मृदेव, नच चैतन्यस्य रूपान्तरमस्ति, तस्मादत्र नास्त्येवाज्ञानध्वंसः, किन्त्वज्ञानस्य कल्पितत्वादत्यन्ताभाव एव तन्निवृत्तिः । किं तर्हि तत्त्वज्ञानस्य साध्यमिति चेत्? नास्त्येवाज्ञानात्यन्ताभाववोधात्मकत्ववाधव्यतिरेकेण तदुक्तं—तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । अविद्या सहकार्येण, नासीदस्ति भविष्यति ॥ १ ॥" इति । शुक्तिवोधेनापि हि रजतात्यन्ताभाववोधरूपो वाध एव क्रियते, मिथ्याभूतस्य च वाध एव ध्वंस इत्यभिधीयते, तद्वदिहापि द्रष्टव्यम्, सचायमधिष्ठानात्मक एव। कथं तर्हि सर्वथा सत इच्छाप्रयत्नाविति चेत् ? कण्ठगतचामीकरन्यायेनानवाप्तत्वभ्रमात् , पुरुषार्थत्वं तु तत्राभिलषितत्वादेव कृतिसाध्यत्वस्य तत्र गौरवेणाप्रवेशात् । चन्द्रामृतपातादौ पुरुषार्थत्वमिष्टमेवाऽप्रवृत्तिस्तु तत्र कृतिसाध्यत्वज्ञानरूपकारणान्तराभावादिति प्रतिपत्तव्यम् । कथं पुनः दृष्टिसृष्टिवादे श्रवणादिपरिपाकजन्मना ज्ञानेन अज्ञानादिवाधः, तथाहि—तस्मिन्मते चैतन्यातिरिक्तपदार्थानामज्ञातसत्त्वं नास्ति, मिथ्यात्वस्य स्वप्नादिदृष्टान्तसिद्धत्वात् तादृशस्यैव सत्त्वस्याङ्गीकारात् । एवञ्च घटादीनां यदा प्रतीतिः तदा तत्त्वम्, नान्यदेति न दण्डादिजन्यत्वम्, किन्त्वज्ञानमात्रजन्यत्वम्, स्वप्नवच्च दण्डाद्युपादानम् । अज्ञानदेहादिकन्तु

भासमानमेव तिष्ठति । अभावनिश्चयाभावाच्च पुत्राद्यभावकृतरोदनाद्यप्रसङ्गः, प्रत्यभिज्ञानमपि भ्रम एव, ततश्चाकाशादिक्रमेण सृष्टिः, पञ्चीकरणं ब्रह्माण्डाद्युत्पत्तिश्चैतन्मते नास्त्येव, घटादेरपरोक्षं तत्तदध्यासादेव । अधिष्ठानस्य स्थायित्वाबाधितत्वाभ्यामज्ञानस्य चानादेः सकलसृष्टिहेतोरङ्गीकारात् न बौद्धमतप्रवेशः, तदेवमज्ञानातिरिक्तकारणाभावात्कथं श्रवणादिजन्यं तत्त्वज्ञानमिति । अत्रोच्यते । लोके अज्ञानातिरिक्तानात्मदृष्टिकारणाभावेऽपि वेदे यागस्वर्गादौ कार्य्यकारणभाववादीनां वेदान्तिनां यथेष्टाचरणप्रसङ्गात् । तस्माद् घटादेरिव स्वर्गनरकादेर्नाज्ञानमात्रजन्यत्वम्, अपि तु विहितनिषिद्धक्रियाजन्यत्वमपीति दृष्टानुश्रविकस्थले अर्द्धजरतीयं प्रामाणिकं नो चेत्? अनात्मदृष्टिस्व(ष्टे)रनवसानप्रसङ्गः । अधिष्ठानज्ञाने तदवसानप्रसङ्गः इति चेत्? न, तस्यैव हेतुत्वाभावात् । अज्ञानं तद्धेतुरिति चेत्? न, ततो दृष्टकारणनिरपेक्षया तदुत्पत्त्या शमाद्यननुष्ठानप्रसङ्गात्, भ्रान्त्या शमाद्यनुष्ठानमिति चेत्? न, सकृद्वेदान्तार्थश्रवणवतां तदभावप्रसङ्गात् । किञ्च भ्रमे अज्ञानमात्रजन्यत्वं युक्तम्, नत्वधिष्ठानज्ञाने, (न)हि रजतभ्रमवत् शुक्तिज्ञाने शुक्त्यज्ञानजन्यत्वम् । तदवश्यं दृष्टिसृष्टिपक्षे लोके अज्ञानातिरिक्तकारणाभावेऽपि वेदे यागादौ स्वर्गादिसाधनता सम्मतैव । ततश्च यागादेः स्वर्गादिसाधनत्वं प्रतीत्य यागमनुतिष्ठतां उत्पन्नस्य स्वर्गसूक्ष्मरूपस्य (यागसूक्ष्मरूपस्य) वा अपूर्वस्य साक्षिसिद्धस्य स्वर्गजनकत्वं अपूर्वस्य साक्षिसिद्धत्वं नानुभूयते इति चेत्? न, अज्ञातसत्त्वानङ्गीकारेणाज्ञानकारणताया इव अपूर्वस्य साक्षिसिद्धताभ्युपगमस्यावश्यकत्वात्, ततश्च यागादेः स्वर्गादिजन्मवत् श्रवणमननादिसहजकृतवेदान्तवाक्यात् तत्त्वज्ञानोत्पत्तिरविरुद्धा । दृष्टिसृष्टिवादे ईश्वरो नास्तीति 'तत्त्वमसि'इत्यत्र कथं तदभेदप्रतीतिरिति चेत्? कुत एतदव-

अशुद्धव्यवहारनयात् साङ्ख्योत्पत्तिः

गतं ? सर्वदाऽप्रतीतेरिति चेत् ? तर्हि जीवोऽपि नास्त्येव, चिद्रूपतया भासमानत्वं चोभयत्र तुल्यम्, ईश्वरत्वं सदा न भासते इति चेत् ? जीवत्वेऽपि तुल्यमेतत्, उभयमपि तर्हि नास्त्येवेति चेत् ? न, साक्षित्वस्यानुभवसिद्धत्वात्, अघटकाज्ञाने शक्तिद्वयस्यावश्यकत्वेन तद्गर्भजीवत्वेश्वरत्वयोरनादित्वस्य यौक्तिकत्वात्, तयोरभेदानुपपत्तेः, लक्षणया अद्वयचिन्मात्रधीर्वक्तव्या । तस्माद् दृष्टिसृष्टिवादेऽपि यथोक्तानुष्ठानवता तत्त्वज्ञानादखण्डानन्दब्रह्मस्वरूपा मुक्तिर्युक्तैव, एतच्छुद्धद्रव्यास्तिकप्रकृतिकमतद्वयं पर्य्यायार्थिकनययुक्तिभिर्निर्लोठनीयमवतारणीयञ्च स्याद्वादे ॥ ११० ॥

अशुद्धाद्व्यवहाराख्यात्ततोऽभूत्सांख्यदर्शनम् । चेतनाचेतनद्रव्यानन्तपर्य्यायदर्शकम् ॥ १११ ॥

"अशुद्धादि"ति व्यवहाराख्यात्–व्यवहारनामधेयात्, अशुद्धात् ततो द्रव्यार्थिकनयात्साङ्ख्यदर्शनमभूत्, कीदृशं तत् चेतनश्चाचेतनद्रव्यं च अनन्तपर्य्यायाश्चाविर्भावतिरोभावात्मकाः तेषां दर्शकं प्रतिपादकमिति यावत् । तथा च तन्मतरहस्यं पुरुषस्तावच्चिद्रूपो न कस्यापि कारणं न कस्यापि कार्य्यं नवा जन्यधर्म्माश्रयः, इति कूटस्थनित्य इत्युच्यते, बुद्धिगताश्च धर्म्मा अज्ञातपरमार्थैस्तत्रारोप्यन्ते भटविजयपराजयौ राज्ञीव, प्रकृतिरचेतना परिणामिनी आदिकारणं च तस्याश्चाद्यपरिणामो बुद्धिर्महत्तत्वापरपर्य्याया तस्या धर्म्मा ज्ञानाज्ञानैश्वर्य्यानैश्वर्य्यवैराग्यावैराग्यधर्म्माधर्म्मरूपा अष्टौ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना अपि, भावनायाः तैरनङ्गीकारादनुभवस्यैव स्मृतिपर्य्यन्तं सूक्ष्मरूपतयावस्थनाभ्युपगमात्, महतत्त्वादहङ्कारः, अहङ्काराद्रूपरसगन्धस्पर्शशब्दतन्मात्राणि पञ्च एकादशेन्द्रियाणि च । पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि जायन्ते, तदुक्तं "मूलप्रकृतिरविकृतिः, महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो, न प्रकृतिर्न विकृतिः पुरुषः

॥ १ ॥" इति पञ्चमहाभूतान्येकादशेन्द्रियाणि चेति षोडशको वर्गः, तत्राचेतनाया अचेतनप्रकृतिकार्य्याया बुद्धेश्चैतन्याभिमानानुपपत्त्या स्वाभाविकचैतन्यरूपः पुरुषः सिद्ध्यति, चैतन्यस्य तु नित्यस्य स्वाभाविकेष्टानिष्टविषयावच्छिन्नत्वस्वभावे अनिर्मोक्षापत्तिः । प्रकृत्यधीनत्वेऽपि विषयावच्छिन्नत्वस्य तस्याऽति(पि) नित्यतया तथैवानिर्मोक्षत्वापत्तिः, घटादेरेवानित्यस्य चैतन्यावच्छेदस्य व्यासङ्गानुपपत्तिः, अतो मनः सिद्ध्यति तत्सम्बद्धेन्द्रियस्य विषयचैतन्यावच्छेदनियामकत्वम् । स्वप्नावस्थायां 'व्याघ्रोऽहम्' 'वराहोऽहम्' इत्यभिमानो दृश्यते, नतु 'नरोऽहम्' इत्यभिमानः । अस्ति च तत्र नरत्वं सन्निहितमिन्द्रियमनःसम्बन्धश्चेति तद्भिन्नोऽहङ्कारो नियतविषयाभिमानव्यापारः स्वीकार्य्यः, सुषुप्ताविन्द्रियस्य व्यापारविरतावपि यद्व्यापारादुच्छ्वासप्रश्वाससन्ततिर्जायते तद्बुद्धितत्त्वं प्रागुक्तभावाष्टकयोगि स्वीकार्य्यम्, तस्य ज्ञानरूपपरिणामेन सम्बद्धो विषयः पुरुषस्य स्वरूपतिरोधायकः । एवञ्च बुद्धितत्त्वनाशादेव विषयावच्छेदाभावात् पुंसो मोक्षः, भेदाग्रहाच्च 'चेतनोऽहं करोमि' इत्यभिमानः, अत एव "प्रकृतेः क्रियमाणानि, गुणैः कर्म्माणि सर्वशः । अहङ्कारविमूढात्मा, कर्ताहमिति मन्यते ॥ १ ॥" इति स्मर्य्यत इति । अत्र नैय्यायिकादयः चेतनोऽहङ्करोमीति बुद्धेः असति बाधके भ्रमत्वायोगाच्चैतन्यकृत्यादिधर्म्मवत्येव बुद्धिः स्वीकर्तव्या तथाच आत्मनो नामान्तरमेतत्, अथ बुद्धिरचेतना परिणामित्वात् तन्तुवत्, इति चेत् ? तर्हि बुद्धिर्न कृतिमती, तत एव, तद्वत्, न धर्म्माधर्म्मादिमती, जन्यत्वाद्, घटवदित्यादिकमपि स्यात्, न स्यात् अनुकूलतर्काभावादिति चेत् तुल्यमुभयत्र । किञ्च यदि बुद्धिर्नित्या तदा बुद्धिकृतभोगावच्छेदस्य सर्वदाऽऽत्मनः सत्त्वादनिर्मोक्षापत्तिः, यद्यनित्या तर्हि जन्येतरस्यानित्यत्वायोग्यत्वात् जन्या वाच्या, तथा च

तदुत्पत्तेः प्राक् तदाश्रितस्य धर्म्मादेरप्यभावे बुद्धितत्त्वस्यानुत्पत्तौ नियतशरीरेन्द्रियादेरप्यभावेऽसंसारः स्यादिति, न किञ्चिदेतदित्याहुः ॥ १११ ॥ अत्र वेदान्तसाङ्ख्यदर्शनयोः शुद्धाशुद्धद्रव्यार्थिकप्रकृतिकत्वं यदुक्तं तत्राविशेषदृष्ट्या भेदबीजाभावमाशङ्कते—

सम्मत्यासहविरोधोद्भावनेबीजमाशङ्कते

**यद्यप्येतन्मतेऽप्यात्मा, निर्लेपो निर्गुणो विभुः । अध्यासाद्व्यवहारश्च, ब्रह्मवादेऽपि सम्मतः ॥ ११२ ॥**

"यद्यपि" इत्यादि यद्यप्येतन्मतेऽपि–साङ्ख्यमतेऽपि, आत्मा निर्लेपः–कर्तृत्वादिलेपरहितः, निर्गुणो–गुणस्पर्शशून्यः, विभुः–व्यापकश्चेति शुद्धात्माभ्युपगमेन उभयत्र शुद्धितौल्यम्, नच भोक्तृत्वस्योपचरितस्यात्मन्यभ्युपगमेन साङ्ख्यदर्शने वेदान्तदर्शनापेक्षया अशुद्धत्वम्, यतोऽध्यासाद्व्यवहारः ब्रह्मवादेऽपि सम्मतः–ब्रह्मवादिनोऽपि हि बुद्धिगुणान् ज्ञानादीन् आत्मनि कल्पितानेवाभ्युपयन्ति न पारमार्थिकान् इति । नायमपि प्रकारः उभयोः शुद्ध्य(द्धि)विशेषाय ॥ ११२ ॥

**प्रत्युतात्मनि कर्तृत्वं,साङ्ख्यानां प्रातिभासिकम् । वेदान्तिनां च निर्वाच्यं, मतं तद्व्यवहारिकम् ॥११३॥**

"प्रत्युत" इति प्रत्युत–वैपरीत्ये, साङ्ख्यानां मते कर्तृत्वं उपलक्षणात् भोक्तृत्वादि च प्रातिभासिकं–अन्यस्थमेवान्यत्रारोपितम्, वेदान्तिनां तु मते नान्तःकरणधर्म्माणां कर्तृत्वादीनां कर्तव्यम्, तच्च परमार्थतोऽसदपि व्यवहारतः सदिति स्थूलव्यवहारानुरोधाद्वेदान्तदर्शन एवाशुद्धत्वं स्यात्, अविद्ययापि अन्यधर्म्ममात्मन्यस्पर्श(यदु)पचारेण च व्यवहारबलं कुण्ठमतिनिश्चयबलं चोत्तेजयतीति साङ्ख्यदर्शने एव शुद्धत्वं स्यादिति भावः ॥ ११३ ॥ किञ्च सत्कार्य्यवादित्वादपि

साङ्ख्यस्य न व्यवहारानुरोधित्वम्, व्यवहारनयो हि कारणव्यापारानन्तरमेव कार्य्योत्पत्तिं पश्यन्नसत्कार्य्यपक्षमेवाश्रयते, न च क्षणिकासत्कार्यानभ्युपगममात्रेणास्य व्यवहारपक्षपाति(त्वम्), तदनभ्युपगमेऽप्युत्पत्त्यनभ्युपगमेन व्यवहार बहिर्भावादित्यभिप्रायं स्पष्टीकरणपूर्वकं निगमयन्नाह—

अनुत्पन्नत्वपक्षश्च, निर्युक्तौ नैगमे श्रुतः । नेति वेदान्तिसाङ्ख्योक्त्योः, सङ्ग्रहव्यवहारता ॥ ११४ ॥

"अनुत्पन्न" इत्यादि अनुत्पन्नत्वपक्षश्च निर्युक्तौ—नमस्कारनिर्युक्तौ, नैगमे—नैगमनये श्रुतः, "उप्पन्नाणुप्पन्नो इत्थ णयाऽऽइनिगमस्साणुप्पन्नो । सेसाणं उप्पन्नो" इति वचनात् । तथा चानुत्पत्तिवादी साङ्ख्यो नैगमनयमेवोपजीवेत् व्यवहारिकोत्पत्तिवादी वेदान्ती च व्यवहारनयमिति भावः, इति हेतोर्वेदान्तिसाङ्ख्योक्त्योस्तद्दर्शनयोः, सङ्ग्रहव्यवहारता—सङ्ग्रहव्यवहाराख्यशुद्धाशुद्धद्रव्यार्थिकप्रकृतिकता न भवति, तथा च सम्मतौ तथोक्तेः का गतिरिति भावः ॥ ११४ ॥ समाधत्त तथापीति द्वयेन—

तथाप्युपनिषद् दृष्टि—सृष्टिवादात्मिका परा । तस्यां स्वप्नोपमे विश्वे व्यवहारलवोऽपि न ॥ ११५ ॥

साङ्ख्यशास्त्रे च नानात्म—व्यवस्था व्यवहारकृत् । इत्येतावत्पुरस्कृत्य विवेकः सम्मतावयम् ॥ ११६ ॥

"तथापि" इति तथाप्युपनिषद्वेदान्तदर्शनप्रवृत्तिः दृष्टिसृष्टिवादात्मिका परा—उत्कृष्टा, मूलाभियुक्ताभ्युपगतत्वात्, तस्यां चाज्ञातसत्त्वाभावेन स्वप्नोपमे विश्वे—जगति सति व्यवहारलवोऽपि—लेशोऽपि नास्ति, तन्मते जाग्रद्व्यवहारस्य

स्वप्नव्यवहारतुल्यत्वात्, तथाच मौलस्य वेदान्तदर्शनस्य व्यवहारापेतत्वेन व्यवहारप्रकृतिता, किन्त्वेकात्मसङ्ग्रहप्रवणतया सङ्ग्रहप्रकृतितैव आकाशोदकपातकल्पमूलदर्शनप्रवृत्तावेव चेयं नयप्रकृतिचिन्ता, इति नार्वाचीनवेदान्तिनां मिथोविरुद्धकल्पनाकोटिक्लेशपराहतानां व्यवहाराभाससमर्थनेनापि प्रतिश्रुतव्याहतिरिति हृदयम् ॥ "साङ्ख्या" इति साङ्ख्यशास्त्रे च, नानात्मनां व्यवस्था प्रतिनियतजन्ममरणादिव्यवहारकृद्भवति, इत्येतावत्पुरस्कृत्य तात्पर्य्यविषयीकृत्यायं विवेकः सम्मतौ, यदुत व्यवहारप्रकृतिकं साङ्ख्यदर्शनं सङ्ग्रहप्रकृतिकं च वेदान्तदर्शनमिति वेदान्तप्रकृतिभूतसङ्ग्रहनयेनैकतया विषयीकृतस्यात्मनः भेदकरणेन सङ्ग्रहविषयभेदकत्वलक्षणसमन्वयाद्व्यवहारप्रकृतिकत्वं साङ्ख्यदर्शनस्य विवक्षितमिति तात्पर्य्यम्, तेन सत्कार्याद्यंशे व्यवहारप्रकृतित्वाभावेऽपि न क्षतिः, आत्मन एव सकलशास्त्रप्रयोजनभागित्वेन मुख्यत्वान्मुख्योद्देशेनैव च नयानां प्रकृतिविकृतिचिन्ताया युक्तत्वादिति भावः ॥ ११५-११६ ॥

यद्येवं सङ्ग्रहव्यवहारौ वेदान्तसाङ्ख्यदर्शनप्रवर्तकौ, नैगमनयस्तर्हि कस्य दर्शनस्य प्रवर्तक इति जिज्ञासायामाह—

**हेतुर्मतस्य कस्यापि शुद्धाशुद्धो न नैगमः । अन्तर्भावो यतस्तस्य सङ्ग्रहव्यवहारयोः ॥ ११७ ॥**

"हेतुरि"ति सामान्यविशेषादुभयग्राहित्वेन शुद्धाशुद्धो नैगमनयः कस्यापि मतस्य—दर्शनस्य, 'न हेतुः' न प्रकृतिः, यतः सामान्यग्रहाय प्रवृत्तस्य सङ्ग्रह एव, विशेषग्रहाय च प्रवृत्तस्य व्यवहार एवान्तर्भाव इति । तदुभयभिन्नं स्वात्मानमेवालभमानस्य न भिन्नदर्शनप्रकृतिकत्वमभिधातुं युज्यत इति ॥ ११७ ॥ कुतस्तर्हि वैशेषिकदर्शनमुत्पन्नं कथं वा तन्न सम्यगित्याकाङ्क्षायामाह—

सम्मत्योक्तसमाधानम्

**द्वाभ्यां नयाभ्यामुन्नीतमपि शास्त्रं कणाशिना। अन्योन्यनिरपेक्षत्वान्मिथ्यात्वं स्वमताग्रहात् ॥ ११८ ॥**

"द्वाभ्यामि"ति द्वाभ्यां—सामान्यविशेषग्राहिभ्यां सङ्ग्रहव्यवहाराभ्यां नयाभ्यां, उन्नीतं—पृथग्व्यवस्थापितमपि, कणाशिना—कणादमुनिना, शास्त्रं अन्योन्यनिरपेक्षत्वात्—परस्परविविक्तद्रव्यपर्य्यायोभयावगाहित्वात्, स्वमताग्रहात्—स्वकल्पनाभिनिवेशात् मिथ्यात्वं, नहि नयद्वयावलम्बनमेव शास्त्रस्य सम्यक्त्वप्रयोजकं, किन्तु यथा स्थाने तद्विनियोगः, स च स्वप्रयुक्तभङ्गद्वयेतरयावद्भङ्गानां स्याद्वादलाञ्छितानां परस्परसाकाङ्क्षाणां तात्पर्य्यविषयतया सम्पद्यते, एकतरस्याप्यतात्पर्ये सिद्धान्तविराधनाया अपरिहारात्, तदाह "जे वयणिज्जविअप्पा संजुज्जन्तेसु होन्ति एएसु। सा ससमयपन्नवणा सिद्धन्तविराहणा अण्णा (तित्थयरासायणाअण्णा) ॥ १ ॥ (सम्मतिप्र० का० गा० ५२) तदिह सामान्यविशेषयोगः कुतस्तरामन्येषां भङ्गानामिति स्फुटमेव मिथ्यात्वं, अतिरिक्तसामान्यविशेषापेक्षां विना महासामान्यान्त्यविशेषयोरिव वस्तुमात्रस्य स्वत एव सामान्यविशेषात्मकत्वमित्यर्थस्यैव यथावन्नयद्वयविनियोगरूपत्वात्, अन्यथानवस्थानात्, तदिदमुक्तम्—"स्वतोऽनुवृत्तिव्यतिवृत्तिभाजः, भावा न भावान्तरनेयरूपाः। परात्मतत्त्वादतथात्मतत्त्वात्, द्वयं वदन्तोऽकुशलास्खलन्ति ॥ १ ॥ एतेन नैयायिकदर्शनमपि व्याख्यातं, पदार्थप्रमाणादिभेदं विना प्रायस्तस्य वैशेषिकदर्शनसमानविषयत्वादिति दिक् ॥ ११८ ॥ ननु सङ्ग्रहव्यवहारयोरेव विषयविवेकेन नैगमस्यान्तर्भावे तस्य पार्थक्ये किं बीजं, अदर्शनेऽपि किञ्चित्कल्पयाम इति चेत्? तर्हि दृष्टं स्वतन्त्रद्रव्यपर्य्यायोभयविषयत्वमेव तथास्तु तथा च तत एव कणादमतोत्पत्तिर्युक्तेति परीक्षापूर्वमाह—

**स्वतन्त्रव्यक्तिसामान्यग्रहायेष्टे तु नैगमे । औलूक्यसमयोत्पत्तिं ब्रूमहे तत एव हि ॥ ११९ ॥**

"स्वतन्त्र" इति । स्पष्टार्थः अत्र चार्थे प्रदर्शितन्यायेन द्रव्यपर्य्यायरूपमुभयमपि परस्परविविक्तमेकत्र विद्यत इत्यभिप्रायः, "नैगमोऽशुद्धद्रव्यास्तिकप्रकृतिः" इति सम्मतिवृत्तिस्वरसोऽपीति ध्येयम् ॥ ११९ ॥

वैशेषिकदर्शनस्यकुठ-उत्पत्तिः

**ऋजुसूत्रादितः सौत्रान्तिकवैभाषिकौ क्रमात् । अभूवन् सौगता योगाचारमाध्यमिकाविति ॥ १२० ॥**

"ऋजुसूत्रादित" इति ऋजुसूत्रादितः—ऋजुसूत्रशब्दसमभिरूढैवम्भूतेभ्यः क्रमात्सौत्रान्तिको वैभाषिको योगाचारो माध्यमिकश्चेति चत्वारः सौगता अभूवन्—उदपद्यन्त, एतेषां स्वरूपमेतेन काव्येन ज्ञेयम्—"अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणेष्यते, प्रत्यक्षो नहि बाह्यवस्तुविसरः सौत्रान्तिकैराश्रितः । योगाचारमतानुगैरभिमता साकारबुद्धिः परा मन्यन्ते बत मध्यमाः कृतधियः स्वच्छां परां संविदम्" ॥ १ ॥ इति, एतद्विशेषावगमपुष्पमदार्थिना तु मत्कृतलताद्वयं परिशीलनीयम् । अत्र वैभाषिकस्य शब्दनयपक्षपातित्वं नित्यानित्यशब्दवाच्यपुद्गलाभ्युपगमात्, ज्ञानार्थलक्षणयौगपद्यरूप व्यञ्जनपर्यायप्रधानत्वाच्चावगन्तव्यम्, योगाचारमाध्यमिकयोश्च शुद्धशुद्धतरत्वेन समभिरूढैवम्भूतपक्षवर्तित्वमिति ॥ १२० ॥

**नयसंयोगजः शब्दालङ्कारादेश्च विस्तरः । कियान् वाच्यो वचस्तुल्यसङ्ख्या ह्यभिहिता नया ॥ २२१ ॥**

"नय" इति शब्दालङ्कारादेर्व्याकरणसाहित्यादिशास्त्रस्य च विस्तरः, नयसंयोगजः—नानानयमयः, आदित एव तत्प्रवृत्तौ नानानयविवक्षायां उपजीवनात्, अन्यथा सार्वपार्षदत्वानुपपत्तेः, अत एव मीमांसका अपि द्रव्यपर्य्याययोः सार्व-

र्जनानभेदाभेदाद्युपपत्तये व्यवहारनयमानन्त्यव्यभिचाराभ्यां बिभ्यन्तौ व्यक्तिशक्तिमपहाय जातौ शक्तिव्युत्पत्तये सङ्ग्रहनयं चाद्रियमाणाः स्वमतप्रवृत्तौ नयसंयोगमेवादावपेक्षन्ते । यत्तु मीमांसकमतस्याशुद्धद्रव्यार्थिकव्यवहारनयप्रकृतिकत्वं सम्मतिवृत्तौ नामनिक्षेपावसरे भाषितं तच्छब्दार्थयोर्नित्यसम्बन्धमात्रवादापेक्षया। "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति तत्सूत्रे औत्पत्तिक इत्यस्य विपरीतलक्षणया नित्य इति व्याख्यानात् पूर्वपूर्वसङ्केतापेक्षायामनवस्थानान्नित्यपदसम्बन्धाभ्युपगम एव (अपि) प्रवृत्तिमूलव्यवहाराद्यन्तशुद्धशास्त्रैदम्पर्य्यपर्य्यालोचनायां तु तस्य नयसंयोगत्वमेव युक्तं, अन्यथा शब्दानुशासनेऽपि स्फोटविचारे शब्दतन्मात्रसङ्ग्रहप्राधान्येन नयसंयोगजत्वं न स्यात्, नयसंयोगजत्वे शब्दादीनां कथं न स्वसमयतुल्यत्वमिति चेत् ? मूढनयानां तेषां यथावद्विभागाकरणात्, अत एव यथावन्नयविभागचिकीर्षया "सिद्धिः स्याद्वादात्" इति सूत्रमुपन्यस्य श्रीहेमसूरयः स्वोपज्ञशब्दानुशासनस्य स्वसमयान्तर्भावेन दृढप्रामाण्यमाविश्चक्रुः, सङ्क्षेपमभिप्रेत्याह उक्तो विस्तरः कियान्वाच्यः, यतः वाचस्तुल्यसङ्ख्या नया अभिहिताः ॥ १२१ ॥

**स्याद्वादनिरपेक्षैश्च, तैस्तावन्तः परागमाः । ज्ञेयोपयुज्य तदियं, दर्शने नययोजना ॥ १२२ ॥**

"स्याद्वादे"ति तैर्नयैः स्याद्वादनिरपेक्षैः—स्याद्वादैकवाक्यतारहितैः, तावन्तो—वचस्तुल्यसङ्ख्या एव, परागमाः—परसिद्धान्ता भवन्ति, अभिनिवेशान्वितनयत्वस्यैव परसमयलक्षणत्वात्, तदिदमुक्तं सम्मतौ—"जावइया वयणपहा, तावइया चेव हुन्ति नयवाया। जावइया नयवाया तावइया चेव परसमया" (तृ० कां० गा० ४) एतावत्तु नयेष्विच्छाकल्पित संयोगजभेदोऽपि समवायान्तरापेक्षकः सुलभ एव इयं दर्शने नययोजनोपयुज्य ज्ञेया, नत्वापातत एव, आपातज्ञानस्य

“जे पज्जवेसु णिदिट्ठा जीवा परसमयगतियिणिदिट्ठा ।
स्वसमयपरसमयविपर्य्यासफलत्वात्, अत एव वस्तुस्थितिविचारे
आयसहावंमि ठिया ते सगसमया मुणेयव्वा ॥ १ ॥ इति दैगम्बरं वचनं [चक्रुः] सम्म्यक्स्वसमयानिष्णाततामभिव्यञ्ज-
यति, द्रव्यास्तिकाभिप्रायः स्वसमयः पर्य्यायास्तिकाभिप्रायः परसमय इत्यस्य स्याद्वादनिरपेक्षत्वान्नयवाक्यमेवैतदिति चेत्?
तर्हि प्रवचनप्रक्रियाव्युत्पादनै(ने)क इवास्योपयोगः, स्थूलसूक्ष्मनयार्थानां क्रमव्युत्पादनस्यैव शास्त्रार्थत्वादिति मुग्धवन्ध-
नमात्रमेतत् । यदपि प्रावचनिकानां जिनभद्रसिद्धसेनप्रभृतीनां स्वस्वतात्पर्य्यविरुद्धविषये सूत्रे परतीर्थिकवस्तुवक्तव्यता-
प्रतिवन्धप्रतिपादनं, तदप्यभिनिवेशनं चेत्? तदा प्रावचनिकत्वक्षतिरिति । तत्र परतीर्थिकपदं भिन्नपरम्परायाततात्पर्य्यानु-
सारिपदं, अत एव नयाभिप्रायेण प्रवृत्तत्वादिति हेत्वभिधानोपपत्तिः, अत एव च नयाभिप्रायेणोभयसमाधानमस्माभि-
र्ज्ञानविन्दौ विहितम्, इत्येवमन्यत्रापि दर्शनप्रयोजनायामुपयोगो विधेयः समयनिष्णातैः ॥ १२२ ॥ अथ नयोत्पादिते-
ष्वपरिमितेषु दर्शनेषु कस्मिन्मिथ्यात्वं कस्मिंश्च सम्यक्त्वमिति जिज्ञासायामाह—

**नास्ति नित्यो न नो कर्ता,न भोक्तात्मा न निर्वृतिः । तदुपायश्च नेत्याहुः,मिथ्यात्वस्थानकानि षट् ॥१२३॥**

“नास्ति” इत्यादि, नास्त्यात्मा इति चार्वाकमते, न नित्य इति क्षणिकवादिमते, न कर्ता न भोक्तेति साङ्ख्यमते, यद्वा न कर्त्तेति साङ्ख्यमते, न भोक्तेत्युपचरितभोक्तृत्वस्याप्यनभ्युपगमाद्वेदान्तिमते, नास्ति निवृत्तिः सर्वदुःखविमोक्षत्वलक्षणेति नास्तिकप्रायाणां सर्वज्ञानभ्युपगन्तृणां यज्वनां मते, अस्ति मुक्तिः परं तदुपायो नास्ति सर्वभावानां नियतत्वेनाकस्मादेव भावादिति नियतिवादिमते, इत्येतानि षट् मिथ्यात्वस्थानकान्याहुः पूर्वसूरयः ॥ १२३ ॥

आयतज्ञानस्यस्वपरसमयविपर्यासफलत्वंदर्शयति

**षडेतद्विपरीतानि, सम्यक्त्वस्थानकान्यपि । मार्गत्यागप्रवेशाभ्यां, फलतस्तत्त्वमिष्यते ॥ १२४ ॥**

"षडेतदिति" एतेभ्यः प्रागुक्तेभ्यः, विपरीतानि षट् सम्यक्त्वस्थानान्यपि भवन्ति, अस्त्यात्मा, नित्यः, कर्त्ता, साक्षाद्भोक्ता अस्ति मुक्तिः अस्ति च तत्कारणं रत्नत्रयसामराज्यमिति, तदिदमुक्तम्—"अत्थि जिओ तह णिच्चो, कत्ता भुत्ता स पुन्नपावाणं । अत्थि धुवं णिव्वाणं तस्सोवाओ अ च्छट्ठाणा" इति चार्वाकादिपक्षनिरासश्चातिभूयानिति लतादित एव तदनुगमो विधेयः । अकस्माद्भवतीत्यनुपायवादिमते चात्यन्तोपयुक्तत्वात् किञ्चिद्विचार्य्यते, अकस्मादिति किंशब्दस्य हेतुपरतया हेत्वभावे भवनपरं उत "अमानोना प्रतिषेधे" इति स्मरणान्निषेधार्थकस्य 'अ' शब्दस्य क्रियासम्बन्धसम्भवात् भवनाभावपरं ? किं वा किंशब्दस्य स्वभिन्नपरतयाऽलीकभिन्नपरतया वा स्वहेतुकत्वपरम् ? अलीकहेतुकत्वपरं वा ? अथवा अकस्मादिति स्वभावादित्यर्थे रूढतया स्वभावादेव कादाचित्कमित्यर्थके ? एतेषु पञ्चसु नैकोऽपि प्रकारो युक्तः, नियतावधिकार्य्यदर्शनात्, अनियतावधित्वे निरवधित्वे वा कादाचित्कत्वस्वभावव्याकोपापातात्, तत्स्वाभाव्ये च सहेतुकत्वस्यावश्यकत्वात्, तदुक्तमुदयनेन "हेतुभूतिनिषेधो न स्वानुपाख्याविधिर्न च । स्वभाववर्णना नैवमुपाधेर्नियतत्वतः ॥ १ ॥ इति" (न्यायकुसुमाञ्जलिका० ५) अथाकाशत्वादीनां (नाम)कदाचित्कत्ववत् कादाचित्कत्वमपि न सहेतुकत्वसाधकमिति चेत् ? न, आकाशत्वादीनां सर्वत्र सत्त्वे आकाशादिस्वभावत्वाभावप्रसङ्गात्, तत्स्वभावत्वं च धर्म्मिग्राहकमानसिद्धमिति हेतुं विनापि देशनियमस्तेषामिति । अथैवं कादाचित्कत्वमपि घटादिस्वभावत्वादेव हेतुं विनापि गगनादिव्यावृत्तमस्त्विति चेत् ? न कादाचित्कत्वस्यावधिनियतत्वात् । सन्त्यवधयो नत्वपेक्ष्यन्त इति चेत् ? न, नियतपश्चाद्भावित्वस्यैवापेक्षार्थत्वात्,

अन्यथा गर्दभाद्धूम इत्यपि प्रतीयेत । तन्नियतत्वेऽपि तद्गतोपकाराजनकस्य कथं तद्धेतुजनकत्वमिति चेत् ? उपकारो हि कार्य्यमिति तद्गतकार्य्यहेतुत्वस्य तद्धेतुत्वेऽतन्त्रत्वात्, अन्यथोपकारहेतुत्वाय उपकारेऽप्युपकारान्तरस्वीकारे अनवस्थापत्तेः, तर्हि घटादिनियतत्वं कपालादेरेव न तन्त्वादाविति कुत इति चेत् ? स्वभावादेवेति गृहाण, अथ तथापि ग्राहकाभावात्तदसिद्धिः, न च धूमादौ वन्ह्यादेरन्वयव्यतिरेकानुविधेयत्वज्ञानसचिवं वह्न्यादिप्रत्यक्षमेव हेतुहेतुमद्भावग्राहकम्, धूममात्रेऽन्वयव्यतिरेकज्ञानासम्भवात्, यत्किञ्चिद्धूमे रासभादेरपि तथाज्ञानात्, रासभादेर्व्यभिचारज्ञानान्न तद्ग्रह इति चेन्न वह्न्यादेरपि व्यभिचारशङ्कासाम्राज्यादिति धूमाद्यर्थिनो वह्न्यादौ प्रवृत्तिश्च सम्भावनयैवोपपद्यत इति परमतमिति चेत् ? न, सामान्यव्यभिचारानुगतागुरुविशेषान्तरानुपस्थितिदशायां यत्किञ्चिद्धूमवह्न्योस्तद्ग्रहसामग्र्या एव वह्निधूममात्रे तद्ग्राहकत्वात्, सति लाघवज्ञाने व्यभिचारशङ्काया अप्रतिबन्धकत्वात्, रासभादौ तु व्यभिचारनिर्णय एव, असति तन्निर्णये तत्र धूमहेतुत्वग्रहेऽपि भ्रमत्वमेव ग्राह्याभावात्, अनन्यथासिद्धनियतपूर्ववर्तित्वं हि हेतुत्वं तथा च वह्न्यादेरवधिभूतस्य धूमादिनियतपूर्ववर्तित्वादनन्यथासिद्धत्वाच्च तद्दुर्निवारम् । यागादृष्टादौ स्वर्गादिनिष्ठकार्य्यतानिरूपितकारणताग्रहश्चावच्छेदकविनिर्मोकेण शब्दानुमानादिनैव तत्प्रामाण्यस्यापि तत्र व्यवस्थापितत्वात् । तृणारणिमण्यादीनां वह्निकारणताग्रहेऽपीयमेव रीतिः, तृणत्वेन व्यभिचारज्ञानस्य तेनैव रूपेण कारणताग्रहविरोधित्वात्, अवच्छेदकौदासीन्येन तृणत्वसमानाधिकरणताग्रहे विरोधाभावात् । अवच्छेदकरूपानुपस्थितौ कथमवच्छेद्यकारणताग्रहः कारणताया ससम्बन्धिकपदार्थत्वेन तत्प्रत्यक्षे सम्बन्धिज्ञानस्य कारणत्वादिति चेत् ? न, "अयं घटः" इति समवायप्रत्यक्षे व्यभि-

चारात्। अथ येन समवायत्वादिना रूपेण ससम्बन्धिकता तेन रूपेण तत्प्रत्यक्षे तस्य हेतुत्वान्न व्यभिचार इति चेत् ? न, तथापि ससम्बन्धिकतावच्छेदकप्रकारकज्ञानत्वेन हेतुत्वमित्यत्र सम्बन्धिमात्रवृत्तित्वस्यैवावच्छेदकपदार्थत्वात्, प्रकृते च इयं वह्निव्यक्तिस्तृणजन्येति कारणताप्रत्यक्षस्यापि तृणकार्य्यताश्रयमात्रवृत्त्यैतद्वह्नित्वप्रकारकज्ञानसाध्यत्वसम्भवात्, यद्वा इयं वह्निव्यक्तिः तृणजन्येति प्रत्यक्षस्यैतद्वह्नित्वावच्छिन्नकार्य्यतावगाहित्वेऽप्यवच्छेदकत्वांशे भ्रमत्वेऽपि कार्य्यतांशे प्रमात्वान्न कोऽपि दोषः। अथान्वयव्यतिरेकाग्रहाप्रकारकजात्या कार्य्यत्वकल्पनाऽनौचित्यात् तथाभूतशक्त्या कारणत्वमेव कल्प्यतां लाघवात् इति चेत् ? न, तृणादेः फूत्कारादिसहकारिनियमानुपपत्तेः मणिफूत्कारादिनापि वन्ह्याद्युत्पत्तिप्रसङ्गात्, तथा च फूत्कारादिजन्यविजातीयवह्नौ तृणत्वादिना हेतुत्वस्यावश्यकत्वात्, न च तृणफूत्कारादिसंयोगेष्वेव शक्तिरिति न तन्नियमानुपपत्तिः, तर्हि तृणत्वादिना तृणादीनामहेतुत्वेऽकारणत्वेनैव सामयिकशक्तिविशेषकल्पनप्रसङ्गात्, तथाभूताभावविशेषस्यैव वा तत्रौचित्यान्नायमपि। वह्नौ जातिभेदस्यानुभविकत्वादेव तत्तद्वच्छिन्ने तृणत्वादिना हेतुत्वमित्यन्ये, वह्नित्वावच्छिन्ने विलक्षणोष्णस्पर्शवत्तेजः कारणमिति नव्याः, तेजस्त्वेन तत्र हेतुत्वम्। द्व्यणुकात्मकवह्नौ तृणत्वादिना त्रसरेण्वादिनिष्ठवैजात्यावच्छिन्ने द्व्यणुकादिनिष्ठवह्नित्वेनेत्येतस्मात् क्वचिदेकान्तेन क्वचिच्च विकल्पेन दण्डत्वादिना घटादौ तृणत्वादिना च वह्निविशेषादौ कारणतायुक्तागमबलात्तत्त्वज्ञानत्वेन कर्म्मविशेषत्वादिना च कारणतावश्यकीति नानुपायवादः श्रेयानिति नैयायिकादयः। वयं तु ब्रूमः, तन्तोरेव पटो न कपालादेरिति, कुत इति प्रश्ने स्वभावादेवेति यदुत्तरं तत्र प्रश्नोत्तरे किं हेतुविषये उत नियामकविषये उभयत्रापि किं

धर्म्म्यालम्बने, उत धर्म्मालम्बने, आद्ये तन्तुजन्यकपालाजन्यपटे स्वभावो हेतुरित्यागतं, सच स्वात्मैवेत्यात्माश्रयः, द्वितीयेऽपि
स एव दोषः स्वस्य स्वनियामकत्वासम्भवात्, भेदगर्भनियामकस्यैव जिज्ञासितत्वाच्च, न तृतीयः, धर्म्महेतोरजिज्ञासित-
त्वात्, नापि चतुर्थः, पटे तन्तुजन्यत्व–कपालाजन्यत्वधर्म्मशालित्वस्य तत्स्वभावनियम्यत्वे निरूपकत्वेन स्वस्यैव प्रवेशात्।
एतेन तत्तत्प्रकारकेश्वरेच्छाज्ञानरूपाया नियतेर्नियामकत्वमपि पामराभ्युपगतं निरस्तम्। तस्मात्स्वभावो नाम स्वहेतुस्त-
स्मादुक्तधर्म्मशालित्वमित्येव व्याख्यातुमुचितम्। तावद्धर्म्मावच्छिन्नतद्व्यक्त्युपपत्तौ तावद्धर्म्मविशिष्टतन्निरूपितभव्यता-
नुप्रवेशेनैव तद्धेतोर्व्याप्रियमाणत्वादि(त्वा)नादित्वा(द्य)वध्यवधिमत्प्रवाहस्यानवस्थादिदोषाननुपातात्। अयमेव जैनानां
तथाभव्यत्वहेतुताप्रवादः, एतदनभ्युपगमे च तीर्थकरातीर्थकरप्रत्येकवुद्धवुद्धवोधितादिसिद्धकार्य्यभेदः कथमुपपाद-
नीयः, तत्रान्यपुष्कलहेत्वभावात्, अथेयं चैत्रावलोकितमैत्रनिर्मितनीलेतरघटत्वादिनापि कार्य्यता स्यादिति चेत्? स्यादेव
किं नः छिन्नम्, तथाभव्यत्वकार्यतायास्तथाभावेऽपि दृष्टदण्डादिकार्य्यताया घटत्वाद्यवच्छेदेनैव यथादर्शनमभ्युपगमेन प्रवृ-
त्त्यादिव्यवहारानुच्छेदात्, इष्यते चानन्यगत्या परेणाप्यर्थसमाजसिद्धधर्म्मेणापि परामर्शतत्त्वज्ञानादिकार्य्यता(कारणता)
स्वाव्यवहितोत्तरानुमि(ति)त्वमोक्षत्वादिना। किञ्च धारावाहिकस्थले कार्य्यैककल्पनिरासाय तत्तत्क्षणत्वेन कालस्य कार-
णतावश्यं वाच्या, पूर्वपूर्वघटज्ञानानां घटत्वरूपविशेषणज्ञानत्वेनोत्तरघटज्ञानहेतुतया तत्र कार्य्ये कालस्य निराकर्तुमशक्य-
त्वात्, एकज्ञानकाले द्वितीयादिसकलोत्पत्तेर्दुर्वारत्वात्। तथा कार्य्यैकदेश्यनिरासाय तत्तद्देशी(य)कारणताप्यवश्यं वाच्या,
कथमन्यथा इह सामग्रीसमवधानादेतद् घटोत्पत्तिवद्देशान्तरीयघटोत्पत्तिर्न स्यात् इत्ययं कालधर्म्मानुप्रवेशेन ऋजुसूत्रन-

